# "For every breath one takes, a child dies from a vaccine - preventable disease."

**Every year, 3.5 million children die for want of vaccine. Imagine, the population of cities of the size of Ahmedabad or Bangalore annihilated every year.**

## "Can we afford to wait?"

**Help implement POLIOPLUS PROGRAMME**
**Rotary International**
**Supporting the immunization programmes of UNICEF and WHO.**

**Besides funding for vaccines, POLIOPLUS helps increase the protection levels of those programmes through SOCIAL MOBILIZATION i.e. community education, volunteer support and public promotion.**

**Rotary will fight Polio Plus measles, diphtheria, tuberculosis, whooping cough and tetanus.**

**For a child it could be a matter of life or limb.**

**Give generously to PolioPlus**



*Cut and mail to :*
**Chairman**
**POLIOPLUS CAMPAIGN TRUST**
128, Golf Links
New Delhi 110 003

**Here's what You Can Do**

YES, WE WISH TO SUPPORT THE POLIOPLUS CAMPAIGN TRUST
We enclose our Cheque/Draft of Rs. ..........
Name ..........................................
..................................................
Designation ..................................
..................................................
Company Address ..........................
..................................................
Phone No. ....................................

*Cheques/Drafts should be drawn in favour of POLIOPLUS CAMPAIGN TRUST payable in Bombay. Contributions are exempted from income tax under section 80 (G) of the Income Tax Act, 1961*

CMP



*"YOU HAVE NOT DONE ENOUGH AS LONG AS YOU ARE CAPABLE OF DOING MORE." **ACT NOW.***

# आचारः परमो धर्मः

अनुभवेन विनाधिगतं श्रुतं
भवति नैव नृणाम् उपकारकम्।
दधनि वर्तत एव हविः पुनः
न मथनेन विना तदवाप्यते।।

"केवलं श्रुतं, केवलम् अधीतं वा प्रायः उपकारकं न भवति। यदा तत् अनुभवपथम् आरोहति तदा एव तस्य उपकारकत्वम्। दधनि घृतनवनीतादीनाम् अंशाः सन्ति एव। किन्तु ते तदा एव प्राप्यन्ते यदा दध्नः मथनं भवति।"

तरणम्, उट्टङ्कनं (Typing) द्विचक्रिकाचालनम् इत्यादयः विद्याः तत्तद्विषयकेण श्रवणेन पठनेन वा न स्वाधीनाः भवन्ति। प्रयत्नसापेक्षाः ताः। तद्विषयकं ज्ञानं क्रियान्वितं सत् अनुभवरूपतां यदा आप्नोति तदा एव स्वाधीनत्वम्। (संस्कृत) सम्भाषणम् अपि एवम् एव। केवलपाण्डित्यकारणतः कथनशक्तिः न सिध्यति।

परमहंसस्य रामकृष्णस्य कथायां श्रूयते– गुडखादनत्यागम् उपदेष्टुं वदन्त्याः पुत्रं परमहंसः रामकृष्णः एकमासानन्तरम् उपदिशति – 'गुडखादनम् अहितकरम्' इति। 'प्रथमदर्शने एव कुतो वा न उपदिष्टम्?' इति तया पृष्टः सः वदति– "तत्समये मया अपि गुडः खाद्यते स्म। स्वाचरणे अविद्यमानम् अंशं कथं वा उपदिशामि?" इति।

वक्तव्यम् अंशं स्वकीये व्यवहारे आनीय यदा वदामः तदा एव वचनस्य वीर्यवत्वम्। यः केवलम् उपदिशति, न तदनुगुणम् आचरति, तस्य वचनं प्रायः कोऽपि न अङ्गीकरोति। तादृशं वचनं वक्तुः कण्ठशोषणाय केवलम्।

स्वातन्त्र्यसङ्ग्रामकाले देशस्य कोणे कोणे ग्रामे ग्रामे जनाः सर्वस्वत्यागार्थं सिद्धाः भवन्ति स्म। एतेषां का प्रेरणा आसीत्? कुत्रापि नगरे कश्चित् नायकः स्वभाषणे 'त्यागार्थं जनाः सिद्धाः भवेयुः' इति वदति स्म। तां वार्तां श्रुत्वा एव जनाः नवप्रेरणां प्राप्नुवन्ति स्म। यतः तत्कालीनाः राष्ट्रनायकाः समर्पितचित्ताः, सदाचारसम्पन्नाः, निःस्वार्थिनः च आसन्। अत एव तेषां भाषणस्य वार्ता, कर्णाकर्णिकया जनैः श्रुता अपि जनान् तथा प्रेरयति स्म।

जिज्ञासा –

# शाब्दबोधः

शिष्यः- श्रीमन्! भवतः सम्भाषणे तदा तदा शाब्दबोधः इति शब्दः आगच्छति। को नाम शाब्दबोधः?

आचार्यः- स च कश्चन पारिभाषिकः शब्दः। सामान्यं विवरणम् एवं दातुं शक्यते – शब्दस्य श्रवणेन कश्चन अर्थः (पदार्थः) स्मृतिपथे आगच्छति खलु? ततः यत् ज्ञानं जायते तदेव 'शाब्दबोधः' इति उच्यते।. शाब्दबोधक्रमेण चिन्तनेन शब्दस्य निष्कृष्टः अर्थः ज्ञायते।

शि -. उदाहरणम्.....?

आ - 'गच्छति' इत्यस्य कः अर्थः इति वदतु भवान्।

शि - गच्छति इत्यस्य कः विशेषार्थः? गमनं करोति इत्यर्थः। अन्यया भाषया वक्तव्यं चेत् 'Goes' इति।

आ - अस्माकं शाब्दबोधानुसारं तु तस्य सुदीर्घः अर्थः अस्ति।

शि - सुदीर्घः अर्थः? गच्छति इत्यस्य एव?

आ - आम्, गमनं नाम किम्? यः गच्छति सः गमनसमये कीदृशं व्यापारं करोति?

शि - सः एकस्मिन् प्रदेशे स्थितः तं देशं परित्यज्य अन्यं प्रदेशं प्राप्नोति।

आ - तन्नाम उत्तरदेशसंयोगसम्बन्धिनः व्यापाराः (क्रियाः) तत्र प्रचलन्ति खलु? अतः गमनं नाम उत्तरदेशसंयोगानुकूलः व्यापारः। तथैव, गच्छति–गच्छन्ति इति अनयोः कः भेदः? वदतु।

शि - गच्छति इति एतत् एकवचने अस्ति। गच्छन्ति इति एतत् बहुवचने अस्ति।

आ - एवं च गच्छति इति पदम् एकत्वम् अपि ज्ञापयति। गच्छति–गच्छामि इति अनयोः कः भेदः?

शि - अस्मच्छब्दस्य योगः अस्ति चेत् गच्छामि इति, अस्मद्-युष्मद्भिन्नशब्दानां योगः अस्ति चेत् गच्छति इति च प्रयोगः।

आ - तथा च कर्त्रनुगुणं रूपे भेदः। गच्छति इति पदं कर्तारम् अपि बोधयति इत्यपि सिद्धम्। गच्छति इति रूपं वर्तमानकाले अस्ति इति तु ज्ञातम् एव। अतः कालः अपि ततः प्रतीयते।

शि - एवं तर्हि 'गच्छति' पदात् उत्तरदेशसंयोगानुकूलः व्यापारः, एकत्वसङ्ख्या, कर्तृत्वम्, वर्तमानकालः च प्रतीयते।

आ - आम्। एवं प्रतीयमानानां परस्परसम्बन्धः अपि भवति। तस्य योजनेन गच्छति इति पदात् 'एकत्वविशिष्टकर्तृनिष्ठा वर्तमानकालिकी संयोगानुकूलक्रिया' इत्यर्थः लभ्यते।

शि - 'अगच्छत्' इति पदात्?

आ - 'गच्छति' इति पदतः वर्तमानकालः इव 'अगच्छत्' इति पदतः भूतकालः प्रतीयते। अन्यत्सर्वं पूर्ववत् एव।

शि - 'रामः' इति पदात्?

आ - एकत्वसङ्ख्या कर्तृत्वं च स्फुटं ज्ञायते। रामः पुमान् अतः पुंस्त्वम् अपि प्रतीयते। एते धर्माः कृष्णे अपि भवन्ति। तर्हि रामकृष्णयोः कः भेदः इति विचारः कृतःचेत् 'कृष्णे अविद्यमानः कश्चन गुणः रामे अस्ति, अतः रामः कृष्णात् भिन्नः' इति ज्ञायते। स एव विशिष्टः भेदसूचकः गुणः 'रामत्वं' नाम।

शि - एवं तर्हि रामशब्दात् एकत्वं, पुंस्त्वं, कर्तृत्वं, रामत्वं च ज्ञायते।

आ - आम्। तथा च शाब्दबोधः एकत्वविशिष्टः पुंस्त्वविशिष्टः, कर्तृत्वविशिष्टः रामत्वविशिष्टः रामः इति।शाब्दबोधस्य स्थूलः परिचयः एषः। भिन्नभिन्नपदानाम् अव्ययानां च अर्थं सम्बन्धं च विस्तरेण चर्चयन्ति अत्र। सुविशालं क्षेत्रम् एतत्।

शि - अहो! प्राचीनानां बुद्धितीक्ष्णता!



# चन्दमामा

मे-१९८८

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. २-५०

वार्षिकं ग्राहकशुल्कं रू. ३०-००




# चन्दमामा

संस्थापकः— 'चक्रपाणिः' सञ्चालकः— 'नागिरेड्डी'

'संस्कृतं यदा व्यवहारे आसीत् तदा शिशवः कीदृशान् शब्दान् वदन्ति स्म?' इत्येषः प्रश्नः इदानीं संस्कृतगृहासक्तानां पुरतः तिष्ठति, ये च स्वापत्यस्य मातृभाषां वस्तुतः अपि संस्कृतम् एव कर्तुम् इच्छन्ति। यथा ग्रान्थिकभाषातः व्यावहारिकी भाषा भिद्यते, तथैव व्यावहारिकभाषातः शिशुभाषा अपि भिद्यते। केचन शब्दाः केवलं शिशुनिमित्तम् एव भवन्ति। न हि एते शब्दाः कोषादिषु दृश्यन्ते। किन्तु ते शतशः वर्षेभ्यः व्यवह्रियमाणाः एव।

उदाहरणार्थं 'मामा' शब्दः पञ्चतन्त्रादिषु बहुधा प्रयुक्तः दृश्यते। किन्तु कोषे तस्य प्रवेशः नास्ति! प्रान्तीयभाषायाम् एतादृशाः शब्दाः बहवः। यथा कन्नडभाषायां— बुचि (गौः इत्यर्थे, इतरार्थे अपि क्वचित्), कच्चि (कीटार्थे), जोत (नमस्कारार्थे) इत्यादयः। इतरासु अपि भाषासु एतादृशाः शब्दाः स्युः एव।

शिशुः भाषाधिगमनसमये दीर्घं, संयुक्ताक्षरघटितं वा पदं न उच्चारयति। वर्णद्वयघटितम् अल्पं पदं प्रयुङ्क्ते सः। अतः दीर्घाणि अपि पदानि विरूपतां प्राप्य तस्य मुखात् निर्गच्छन्ति। आरम्भे ज्येष्ठाः अपि तादृशान् एव शब्दान् पाठयित्वा कालान्तरे साधून् शब्दान् पाठयन्ति। एवं तर्हि संस्कृते तादृशाः शब्दाः के? कैः शब्दैः शिशुः सलीलं व्यवहरेत्? संस्कृतस्य मातृभाषात्वं प्रतिपादयद्भिः सर्वैः अपि सगम्भीरं चिन्तनीयम् एतद्विषये।

सम्पुटः—५. मे—८८ सञ्चिका—२

प्रतिकृतिमूल्यं रू. २-५० * वार्षिकं ग्राहकशुल्कं रू. ३०-००

चंदा मामा बूझ के हारे–
छोटे छोटे, प्यारे प्यारे,
रंगबिरंगे कैसे तारे?
तारे नहीं, ये जेम्स हैं तारे.



Cadbury's **GEMS**

जो चाहे खोले, जो चाहे खाले.

Cadbury's GEMS

OBM/2286/HN

# रसवार्ता:



## प्लवमानः हिमपर्वतः

४० कि.मी. आयामयुतः १५८ की.मी. दैर्घ्ययुतः च महाकारकः हिमपर्वतः इदानीम् अण्टार्कटिकापर्वततः पृथग्भूय रास् समुद्रे प्लवमानः अस्ति। एतस्य आकारः तावत् अस्ति यत् एषः हिमपर्वतः कथञ्चित् लास् एञ्जलीस् समीपम् आनीतः चेत् अगामिषु ६७५ वर्षेषु तस्मिन् नगरे जलाभावः एव न भवेत्।

## एकाकिन्या समुद्रप्रयाणं कृतम्!



न्यूजर्सीप्रदेशीया टानियायेबीनामिका २१ वर्षीया तरुणी वर्षद्वयात् पूर्वं स्वपित्रा दत्तया लघुनौकया एकाकिनी समुद्रप्रयाणम् आरब्धवती। बेर्मूडा, पनामा, आस्ट्रेलिया, श्रीलङ्का इत्यादीन् प्रदेशान् दृष्ट्वा सा स्वस्थानं प्राप्तवती च।




## प्राचीनभवनं विक्रयणार्थम्!

ब्राम् स्टोकर्‌महोदयेन सुप्रसिद्धः 'ड्राकुला' ग्रन्थः रचितः अस्ति। तत्रत्यस्य ड्राकुलापात्रस्य चित्रणं रोमानिया देशीयस्य व्लाड्नामकस्य माण्डलिकस्य जीवनम् आधारीकृत्य कृतम् अस्ति। तेन माण्डलिकेन यत्र वासः कृतः तच्च भवनम् इदानीं विक्रयणार्थम् अस्ति।

## शोभाहीनं भवेत् चार्मिनार्!



हैदराबादनगरे स्थितं चार्मिनार्‌भवनं ४०० वर्षेभ्यः पूर्वं निर्मितम्। वातावरणकालुष्येण ध्वनिकालुष्येण च एतत् अपूर्वं भवनम् अचिरात् एव शोभाहीनं भवेत् इति भाव्यते।

# परमालसः

धनिकः कश्चित् कदाचित् नगरं गच्छन् आसीत्। मार्गे सः वृक्षस्य अधः पादौ प्रसार्य शयानं कञ्चन अलसं दृष्टवान्।

एतं हितं बोधयितुम् इच्छन् सः धनिकः तस्य समीपं गत्वा उक्तवान्– "एवं वृथा कालं यापयति खलु? कुतो वा किमपि कार्यं न करणीयम्?" इति।

"कार्येण किं सिध्यति?" इति पृष्टवान् अलसः।

"धनं प्राप्यते" इति उत्तरं दत्तवान् धनिकः।

"धनप्राप्तेः अनन्तरम्?" इति पुनः प्रश्नं कृतवान् अलसः।

"एषः उत्तमः पुरुषः इति भावयन् कोऽपि कन्यापिता कन्यां दद्यात्" इति उक्तवान् धनिकः।

"विवाहानन्तरम्?" इति पृष्टवान् अलसः।

"पुत्राः जायन्ते। तैः सह क्रीडनम्, आमोदः, प्रमोदः ...।"

"एतावदेव वा? अनन्तरं किमपि?"

"यदा पुत्राः प्रौढाः भवन्ति तदा तेषां विद्याभ्यासस्य व्यवस्था। ते समाजे ख्याताः यथा भवेयुः तथा करणम्।"

"ततस्ततः?" इति पुनः पृष्टवान् आलसः।

"यदा पुत्राः सम्पादनरताः भवन्ति तदा भवान् सुखेन स्थातुं शक्नोति, निरातङ्कं जीवनं यापयितुं शक्नोति च" इति उक्तवान् धनिकः।

"तत् तु इदानीम् एव कुर्वन् अस्मि खलु? किं भवतः उपदेशेन? स्वकार्यं पश्यतु तावत्" इति उक्तवान् अलसः।

'मूर्खस्य उपदेशः व्यर्थः एव' इति तत्त्वं स्मरन् सः धनिकः मौनं ततः निर्गतवान्।





# विजयी जयः

गिरिनन्दिनीराज्यं गौरीनाथः नाम राजा पालयन् आसीत्। तस्य पुत्री लावण्या। अनुपमसुन्दरी एषा प्राप्तवयस्का जाता। तस्याः अनुपमं सौन्दर्यं सर्वत्र प्रसिद्धम् अभवत्।

तस्याः सौन्दर्यं श्रुत्वा बहवः राजकुमाराः तां परिणेतुम् इष्टवन्तः। किन्तु एताम् इच्छां गौरीनाथस्य पुरतः प्रकटयितुं कोऽपि न शक्नोति। यतः गौरीनाथस्य तादृशः उग्रस्वभावः आसीत्।

गिरिनन्दिनीराज्यस्य उत्तरस्यां दिशि स्थिते गहनारण्ये काचित् कापालिका आसीत्। सा क्षुद्रदेवतां काञ्चित् वशीकृतवती आसीत्।

तस्याः पुत्रः अपि तया सह निवसति। सः तु अतीव कुरूपी। आत्मनः कुरूपं जानन् अपि सः सुन्दरीं कन्यकां परिणेतुम् इच्छति।

एकदा सः 'लोके अपूर्वसुन्दरी युवतिः का' इति मान्त्रिकदर्पणे पश्यन् आसीत्। तदा तत्र लावण्यायाः चित्रम् आगतम्। तद्दिने एव सः कापालिकपुत्रः गौरीनाथसमीपं गत्वा अहं लावण्यां परिणेतुम् इच्छामि इति इच्छां निर्भयं प्रकटितवान्।

कुरूपी कश्चित् स्वपुत्रीं परिणेतुम् इच्छन् साक्षात् निवेदितवान् अपि इत्येनन गौरीनाथस्य महान् कोपः आगतः। उग्रस्वभावः सः तद्दिने एव अग्रिमपरिणामादिकम् अविचार्य तं कापालिकपुत्रं शूलम् आरोपितवान्।

बहूनां दिनानाम् अनन्तरम् अपि यदा पुत्रः न प्रत्यागतः तदा चिन्ताक्रान्ता कापालिका क्षुद्रदेवतायाः साहाय्येन प्रवृत्तं समग्रं ज्ञातवती। पुत्रस्य मरणं ज्ञात्वा सा नितरां क्रुद्धा। तद्दिने एव सा मायया अन्तःपुरं प्रविश्य

"भीमाता"



सुप्तवतीं राजकुमारीं स्वकुटीरं नीतवती।

प्रतीकारं साधयितुम् इच्छन्ती सा राजकुमारीम् अरण्यस्य मध्यभागे एकत्र स्थापयित्वा तां परितः रङ्गवल्लीचूर्णेन वलयं निर्मितवती। अनन्तरं मन्त्रेण अभिमन्त्र्य तस्मिन् एव अरण्ये अपरत्र निवसन्त्याः अनुजायाः गृहं गतवती च।

राजा गौरीनाथः अन्तःपुरे पुत्रीम् अपश्यन् चिन्ताक्रान्तः सन् सर्वासु दिक्षु राजकुमार्याः अन्वेषणार्थं भटान् प्रेषितवान्।

उत्तरस्यां दिशि गताः भटाः व्रणिताः सन्तः प्रत्यागत्य महाराजं निवेदितवन्तः– "प्रभो! गाढारण्ये वयं राजकुमारीं दृष्टवन्तः। अस्माकं दर्शनस्य समनन्तरम् एव सा राक्षसरूपं धृतवती। अस्मान् ताडयन्ती नखैः व्रणान् उत्पादितवती। असहायाः वयं कथञ्चित् सजीवं प्रत्यागतवन्तः" इति।

आश्चर्यचकितः गौरीनाथः स्वयं तैः सूचितं प्रदेशं प्रति गतवान्। तत्र सः लावण्यां दृष्ट्वा आह्वयन् तस्याः समीपं गतवान्। सा तु पितरं दृष्ट्वा वेगेन प्रतिगन्तुम् आरब्धवती।

गौरीनाथः ताम् अनुसृतवान्। लावण्या यदा अभिमन्त्रितां रङ्गवल्लीरेखाम् अतिक्रान्तवती तदा घोरं राक्षसरूपं प्राप्तवती। झटिति परिवृत्य स्थित्वा राजानं ताडयितुम् आरब्धवती च। तस्याः घोराकारं दृष्ट्वा भीतः राजा वेगेन ततः पलायितवान्।

राजधानीम् आगतः राजा मन्त्रिणां सभायां प्रवृत्तं समग्रं निवेदितवान्। समालोचनानन्तरं निश्चितं यत् यः राजकुमारीम् अरण्यतः आनेष्यति तस्मै एव सा दीयते इति। एषा वार्ता राज्ये सडिण्डिमघोषं प्रसारिता।

एतां वार्तां श्रुत्वा बहवः राजकुमाराः लावण्यां परिणेतुम् इच्छन्तः अरण्यं गतवन्तः। किन्तु राक्षसरूपं धृतवत्या लावण्यया ताडिताः सन्तः श्रान्त्या प्रत्यागतवन्तः च। एतदनन्तरं कोऽपि तद्विषये उत्साहं न प्रकटितवान्।

राजधान्यां जयः नाम युवकः निवसति स्म। बाल्ये एव तदीया माता दिवङ्गता आसीत्। पित्रा अन्या काचित् परिणीता आसीत् अपि।

तस्याः विमातुः तु जयविषये असमाधानम्। सा ज्येष्ठस्य जयस्य विवाहविषयम् अचिन्तयन्ती स्वपुत्रस्य विवाहं चिन्तयन्ती आसीत्। पिता तु एषा यथा वदति तथा अङ्गीकरोति। अतः जयः असहायः जातः आसीत्।

जयस्य अनुजस्य विवाहार्थं प्रयत्नं दृष्ट्वा केचन तां विमातरं पृष्टवन्तः– "अग्रजस्य विवाहे अजाते, अनुजस्य विवाहार्थं प्रयत्नः किमर्थम्?" इति।

तदा सा उपहसन्ती उक्तवती– "जयः तु साहसी बुद्धिमान् च। युवराज्ञीम् एव परिणेतुं समर्थः अपि" इति।

जयः एतादृशानि वचनानि श्रुतवान्। तद्दिने सः निश्चितवान्– 'जयो वा प्राप्येत मरणं वा भवेत्। अहम् अरण्यं गच्छामि। राजकुमार्याः विमोचनार्थं प्रयत्नं करिष्यामि। गृहे स्थितेः अपेक्षया एतत् एव वरम्' इति। अतः सः तत् घोरारण्यं प्रविष्टवान्।

अरण्यस्था लावण्या जयं दृष्ट्वा परिवृत्य स्थितवती।

एतत् दृष्ट्वा जयः वेगेन प्रत्यागतवान्। पुनः रात्रौ तत्र गतवान्। तदा कौमुदी प्रसृता आसीत्।

कौमुद्याः प्रकाशे तेन प्रकाशमाना काचित् रङ्गवल्लीरेखा दृष्टा। राजकुमारी एतस्याः रेखायाः कारणेन एव एवं राक्षसरूपं धरति इति ज्ञातवान् सः।



तत्क्षणे एव समीपस्थायाः नद्याः पत्रपुटेन जलम् आनीय तां रङ्गवल्लीरेखां क्षालयितुं प्रयत्नं कृतवान्। महान् प्रयत्नः कृतः चेदपि सा रेखा यथापूर्वम् एव आसीत्।

अग्रे किं करणीयम् इति अजानन् जयः एकं वृक्षम् आरुह्य शयानः रात्रिं यापितवान्। प्रभातसमये तस्य मनसि विचारः आगतः– 'एतां रेखां लिखितवती व्यक्तिः समीपे कुत्रापि भवेत् एव' इति। अतः सः वृक्षात् अवतीर्य अन्वेषणम् आरब्धवान्।

किञ्चिद्दूरं यदा गतं तदा तेन कश्चन शिथिलः तृणमयः कुटीरः दृष्टः। कुटीरस्य पुरतः शिलायाः उपरि काचित् वृद्धा उपविष्टवती आसीत्। 'एषा एव तां रेखां



लिखितवती स्यात्, अन्यथा एषा अरण्ये एकाकिनी कथं तिष्ठेत्?' इति आलोचितवान् जयः।

सा वृद्धा आगच्छन्तं जयं दूरतः एव दृष्ट्वा पृष्टवती-"कः भोः भवान्?" इति।

तदा जयः उक्तवान्– "अम्ब! अहम् एतस्य देशस्य राजा न। कोटिशः रूप्यकाणां सम्पादने समर्थः वणिक् अपि न। अतः मम परिचयकथनेन किं प्रयोजनम्? चिन्तयतु– अहं कश्चन पथिकः इति। भवती तु मन्त्रप्रयोगसमर्था कापालिका खलु?" इति।

"अहं न कापालिका। मम भगिनी कापालिका आसीत्। भवान् तु राजकुमारीम् अन्विष्यन् आगतः स्यात् खलु?" इति पृष्टवती सा वृद्धा।

"आम्। भवती प्रथमं तत्र दृश्यमानां रङ्गवल्लीरेखाम् अपसारयतु। पुत्र्याः दुर्गतिं दृष्ट्वा चिन्ताक्रान्तः भीतः च महाराजः शय्याम् आश्रितवान् अस्ति" इति उक्तवान् जयः।

"एवं वा? मम भगिनी अपि महाराजेन मारितस्य स्वपुत्रस्य विषये एव चिन्तयन्ती व्यथया मरणं प्राप्तवती" इति खेदेन उक्तवती सा वृद्धा।

"एवं तर्हि प्रतीकारं साधयितुम् इच्छन्ती भवत्याः भगिनी लावण्यां मन्त्रप्रयोगेण अरण्यम् आनीय दिग्बन्धने स्थापितवती खलु?" इति पृष्टवान् जयः।

"आम्। सा यद्यपि तथा कृतवती, किन्तु मरणसमये तद्विषये अतीव खिन्ना। क्षुद्रदेवतायाः उपासना कृता यत्, लावण्या सङ्कटे यत् पातिता तद्भये अपि सा पश्चात्तापम् अनुभूतवती" इति उक्तवती सा वृद्धा।

"केवलेन पश्चात्तापेन किं प्रयोजनम्? किं तेन राजकुमार्याः कष्टम् अपगतं भविष्यति? किं राजकुमारी मन्त्रबन्धनात् मुक्ता भविष्यति?" इति खेदेन पृष्टवान् जयः।

"तया राजकुमार्याः विमोचनार्थं कश्चन मार्गः स्वमरणसमये सूचितः अस्ति अपि। किन्तु मन्त्रतन्त्राभिज्ञया तया सूचितस्य वचनस्य अर्थः कः इति अहं न जानामि।

राजकुमार्याः विमोचनं सा अपि मनसा इच्छति स्म एव। एतत्कार्यं मम उपरि आरोप्य सा मरणं प्राप्तवती। 'सपत्न्योः मध्ये शिरसि स्थितायाः अनुग्रहं प्राप्य दयाभिक्षाम् आनीय पातितं चेत् सा राजकुमारी शापमुक्ता भविष्यति' इति सूचितवती मम भगिनी। एतस्य कः अर्थः इति तु मया न ज्ञातम्" इति उक्तवती सा वृद्धा।

जयः क्षणकालम् आलोचनामग्नः आसीत्। अनन्तरम् उत्साहेन सः उक्तवान् — "अम्ब! भवत्याः अग्रजायाः वचनस्य अर्थः मया ज्ञातः। गङ्गानदी इतः समीपे एव अस्ति खलु? एकं कलशं पात्रान्तरं वा ददातु कृपया" इति।

"पात्रदाने कः क्लेशः? कीदृशं पात्रं ददामि? कांस्यमयं, पित्तलमयम् उत रजतमयम्?" इति वदन्ती सा वृद्धा उत्थाय कुटीरं प्रविष्टवती।

जयः तया सह कुटीरस्य अन्तः गत्वा एकं कलशं स्वीकृत्य गङ्गानदीं प्रति प्रस्थितवान्।

अनन्तरदिने जयः गङ्गाजलं स्वीकृत्य लावण्यायाः समीपं गतवान्। तं दूरतः एव दृष्ट्वा लावण्या राक्षसरूपं धृत्वा एतस्य समीपम् आगतवती।

अत्रान्तरे जयः रङ्गवल्लीरेखां गङ्गाजलेन सिक्तवान्। तदा सा रेखा कृष्णवर्णतां प्राप्य धूलिसात् जाता। अनन्तरक्षणे लावण्या राजकुमारीरूपेण परिवृत्ता जयम् आश्चर्येण पश्यन्ती स्थितवती।

जयः तस्याः समीपं गत्वा प्रवृत्तं समग्रं निवेद्य तया सह राजधानीं गतवान्।

राजा गौरीनाथः पुत्र्याः प्रत्यागमनेन अतीव सन्तुष्टः। सः जयस्य साहसप्रियतां बुद्धिमत्तां च श्लाघितवान्। पूर्वं यथा घोषितं तदनुगुणं जय-लावण्ययोः विवाहं सवैभवं कारितवान्।

राज्ञः जामाता जयः राजकार्येषु साहाय्यं कुर्वन् कीर्तिं सम्पाद्य सुखेन जीवितवान्।





# सन्देहनिवृत्तिः

धवलगिरिराज्यं नागवर्मा नाम राजा धर्ममार्गेण परिपालयन् आसीत्। सः सर्वेषु विषयेषु सूक्ष्मतया चिन्तयति। एकदा यदा सः एकान्ते उपविष्टवान् आसीत् तदा कश्चन सन्देहः तस्य मनसि उत्पन्नः– 'मनुष्येषु उत्तमः कः इति कथं ज्ञातव्यम्? उत्तमस्य व्यवहारः कीदृशः भवति? किं बाह्येन व्यवहारेण कस्यापि स्वभावः ज्ञातुं शक्यते?' इति।

अनन्तरदिने सः राजसभायाम् एतं प्रश्नम् उपस्थापितवान्। यदि केनापि एतस्य उत्तरं ज्ञायेत तर्हि वक्तव्यम् इति सूचितवान् च।

आस्थानिकेषु एकैकः अपि एकैकम् उत्तरम् उक्तवान्। किन्तु तेषु केनापि उत्तरेण नागवर्मा तृप्तः न जातः। तस्य मनसि सन्देहः तथैव स्थितः अभवत्।

केषाञ्चित् दिनानाम् अनन्तरं राजा नागवर्मा मन्त्रिणा परिवारजनैः च सह मृगयार्थम् अरण्यं गतवान्। तत्र राजा वराहम् कञ्चित् अनुसरन् एकत्र गतवान्। मन्त्री कञ्चित् मृगम् अनुसरन् अपरत्र गतवान्। परिवारजनाः अन्यत्र कुत्रापि स्थिताः अभवन्।

मध्याह्नकालः आगतः। राजधानी प्रतिगन्तुम् इच्छन्तः परिवारजनाः मृगयाविहारं परित्यज्य राज्ञः मन्त्रिणः च प्रतीक्षां किञ्चित् कृत्वा तयोः अन्वेषणार्थम् उद्युक्ताः अभवन्।

एवम् अन्वेषणार्थं गतः कश्चन भटः कस्यचित् वटवृक्षस्य अधः नेत्रे निमील्य उपविष्टवन्तं संन्यासिनं दृष्टवान्।

अश्वस्य खुरपुटशब्दं श्रुतवतः संन्यासिनः ध्यानस्य भङ्गः जातः। सः कुत्रापि पश्यन् पृष्टवान्– "कः भवान्? किम् आवश्यकं

भवतः?" इति।

एषः अन्धः इति जानन् सः भटः पृष्टवान्–"अये अन्धसंन्यासिन्! भवता किञ्चित्कालतः पूर्वम् एतेन मार्गेण गच्छतः कस्यचित् पादध्वनिः श्रुतः वा?" इति।

"भोः, एतेन मार्गेण कोऽपि न गतवान्" इति उक्तवान् मुनिः। भटः ततः अन्यत्र गतवान्।

किञ्चित्कालानन्तरं मन्त्री महाराजस्य अन्वेषणं कुर्वन् मुनेः समीपम् आगतवान्। मुनिः अन्धः इति विषयः तेन ज्ञातः। सः तं पृष्टवान्– "भवान् तु अन्धः। कमपि भवान् द्रष्टुं न शक्नुयात्। तथापि शब्दं श्रुत्वा गन्ता पशुः वा मनुष्यः वा इति ज्ञातुं शक्नुयात् इति भावयामि। एतेन मार्गेण गच्छतः कस्यचित् पादध्वनिः भवता श्रुतः वा?" इति।

"मन्त्रिवर्य! इतः पूर्वम् एतेन मार्गेण कश्चन भटः गतवान्। अनन्तरम् इदानीं भवान् आगतवान्" इति उक्तवान् संन्यासी।

मन्त्री अश्वं प्रेरयन् अग्रे गतवान्।

किञ्चित्कालानन्तरं नागवर्मा अश्वं चालयन् तत्र आगतवान्। वृक्षस्य अधः उपविष्टवन्तं संन्यासिनं दृष्ट्वा अश्वात् अवतीर्य नमस्कृत्य विनयेन पृष्टवान्– "मुनिवर्य! परिवारेण सह अहं मृगयार्थम् आगतवान्। किन्तु इतस्ततः अटन् एकाकी संवृत्तः। तेषु कोऽपि अत्र आगतवान् वा? तादृशः शब्दः श्रुतः वा भवता?" इति।

तदा मुनिः उक्तवान्– "महाराज! किञ्चित्कालतः पूर्वं कश्चन भटः एतेन



मार्गेण गतवान्। अनन्तरं महामन्त्री अपि अत्र आगतवान् आसीत्" इति।

"ताभ्यां कस्यां दिशि गतम् इति किमपि ज्ञातं वा?" इति पृष्टवान् राजा।

तयोः गमनस्य दिशं प्रदर्शितवान् मुनिः। तं मार्गम् अनुसरन् राजा स्वपरिवारं प्राप्तवान्।

'सः मुनिः भटमन्त्रिणोः भेदं कथं ज्ञातवान्? अहं राजा इति तेन कथं ज्ञातम्? भटं भट इति, मन्त्रिणं मन्त्री इति, मां च राजा इति सः यत्सम्बोधितवान् तत् कथं तेन शक्तम्? यतः सः पूर्णतः अन्धः' इति आलोचितवान् राजा।

एतां समस्यां परिहर्तुम् इच्छन् राजा मन्त्रिणा भटेन च सह अरण्यस्थस्य तस्य मुनेः समीपं गत्वा आत्मनः परिचयं निवेद्य पृष्टवान्– "दृष्टिहीनः भवान् अस्मासु परस्परभेदं कथं ज्ञातवान्? कथं तत्तन्नाम्ना सम्बोधयितुं शक्तवान्?" इति।

तदा सः संन्यासी मन्दहासपूर्वकम् उक्तवान्– "महाराज! सः भटः आगत्य माम् अन्धसंन्यासिन् इति सम्बोधितवान्। अतः सः कश्चन सामान्यः भटः इति तर्कितवान्। मन्त्री तु मम समीपम् आगत्य प्रथमं मम अन्धत्वम् उल्लिख्य अधिकारवाण्या पृष्टवान्। अतः अहं तं मन्त्रिणं ज्ञातवान्। अनन्तरम् आगतः भवान् अश्वात् अवतीर्य प्रवृत्तं सर्वं निवेद्य कोऽपि एतेन मार्गेण गतवान् वा इति विनयेन पृष्टवान्। मम अन्धत्वं जानन् अपि भवान् न उल्लिखितवान्। अतः भवान् राजा एव इति अहं तर्कितवान्। भवन्तः त्रयः अपि मां यत् सम्बोधितवन्तः तेनैव अहं भवतां स्वरूपं ज्ञातुं शक्तवान्" इति।

मुनेः उत्तरेण राजा सन्तुष्टः। भटः मन्त्री च लज्जया शिरः अवनमय्य स्थितवन्तौ।

'मनुष्यस्य व्यवहारं दृष्ट्वा, तस्य मुखात् निर्गच्छन्ति वचनानि श्रुत्वा च तदीयम् उत्तमत्वम् अधमत्वं वा ज्ञातुं शक्यते' इत्यंशं सुस्पष्टं ज्ञात्वा महाराजः समाधानेन ततः गतवान्।





# सुवर्णखनी

## ५

[युवराजं खादितुम् आगतं महामृगं विनोदः मारितवान्। अर्चकस्य आज्ञानुसारं भटाः विनोदं कारागारे स्थापितवन्तः। मध्यरात्रे एकाकिरूपेण कारागारम् आगतः महाराजः ज्ञानभूमिं परिचाययितुं विनोदम् राजभवनस्य उपरितनं भागं नीतवान्। ततः ज्ञानभूमेः वैशिष्ट्यं प्रदर्शितवान् च। तदनन्तरम् ......]

महामृगस्य मरणेन दुःखितानां जनानां समावेशे अर्चकः सः कुब्जः वृद्धः उक्तवान्- "अस्माभिः भक्त्या आराधितस्य पवित्रमृगस्य अवतारपरिसमाप्तेः निमित्तं केनापि खेदः न अनुभोक्तव्यः। वयम् अचिरात् एव अन्यं महामृगं सम्पादयिष्यामः" इति।

तदा तत्र सम्मिलितेषु एकः पौरः पृष्टवान्- "कथञ्चित् सः महामृगः मृतः। पुनः अन्यस्य महामृगस्य सम्पादनार्थं श्रमः किमर्थम्? तं विना किं वयं जीवितुं न शक्नुमः?" इति।

"महामृगः न अपेक्षितः इति? वस्तुतः भवान् एव अस्मिन् लोके न अपेक्षितः" इति वदन् अर्चकः करताडनशब्दं कृतवान्।

तदा द्वौ भटौ आगत्य तं पौरम् आकृष्य बलात् ततः नीतवन्तः।

तदा अर्चकः पुनः उक्तवान्- "भो भोः पौराः! एका शुभवार्ता यत् पवित्रं महामृगं यः

"मनोवकाश:"



कियत् औद्धत्यं तस्य?" इति वदन् विनोदः पुनरपि अर्चकस्य दिशि दृष्टिं प्रसारितवान्।

"इदानीं वयं दैनन्दिनं कार्यक्रमम् अनुवर्तयाम" इति वदन् सः अर्चकः क्षणत्रयं यावत् मौनं स्थित्वा हठात् उच्चैः रोदितुम् आरब्धवान्। तम् अनुकुर्वन्तः जनाः अपि रोदितुम् आरब्धवन्तः।केचन आक्रन्दनं कुर्वन्ति, केचन निश्शब्दं रुदन्ति, अन्ये केचन स्ववक्षःस्थलं ताडयन्तः रुदन्ति! अपरे केचन रुदन्तः स्ववस्त्राणि छिन्नविच्छिन्नानि कुर्वन्ति। क्षणाभ्यन्तरे सर्वत्र रोदनस्य प्रवाहः! रोदनस्य एव प्रतिध्वनिः तत्र!

एतत् घोरं दृश्यं द्रष्टुम् अनिच्छन् विनोदः नेत्रे निमील्य स्थितवान्। एतत् दृष्ट्वा राजा तत् दृश्यं निवारयन् उक्तवान्- "निद्राभावतः जायमानम् अनारोग्यम् एवं क्रमेण निवारयन्ति मम प्रजाः" इति।

"भवताम् एषः क्रमः न विशेषप्रयोजनकारी इति मम अभिप्रायः। वस्तुतः आरोग्यस्य मूलं हासः। अतः प्रजानां मुखे हासः यथा भवेत् तथा कुतो वा न करणीयं महाराज?" इति पृष्टवान् विनोदः।

महाराजः विनोदस्य मुखम् आश्चर्येण पश्यन् पुनः पृष्टवान्- "हासः नाम कीदृशः सः?" इति।

"हासः नाम हासः एव" इति उत्तरितवान् विनोदः।

"तम् अजानन् खलु पृच्छामि-कीदृशः सः

मारितवान्, यश्च अस्माकं बन्धने अस्ति, तं मानवरूपिणं राक्षसं मारयित्वा वयं उत्सवम् आचरन्तः मृतां मृगदेवतां तर्पयेम" इति।

एतत् श्रुत्वा विनोदः परिवृत्य महाराजस्य मुखं दृष्टवान्। राजा शिरः चालयन्- "एतदर्थं मम तु सहमतिः नास्ति" इति उक्तवान्।

"उपकृतोऽस्मि महाराज! किन्तु मम सन्देहः यत् सः सामान्यः अर्चकः महाराजं भवन्तम् अपृष्ट्वा एव कथं वा मम मरणदण्डनम् उद्घोषितवान् इति। राज्ये महाराजः एव खलु अन्तिमं प्रमाणम्? तेन अर्चकेण अधिकारस्य दुरुपयोगः क्रियमाणः अस्ति खलु? भवतः इच्छायाः विरुद्धम् आचरन् सः कुतो वा कठोरं न दण्डनीयः?



इति? स्पष्टं वदतु भोः किमर्थं गोपनम्?" इति मुग्धस्वरेण उक्तवान् राजा।

"हा हन्त! वस्तुतः अपि भवान् हासं न जानाति एव! अथवा विनोदार्थम् एवं वदति?" इति राजानं पश्यन् उद्गारं प्रकटितवान् विनोदः।

राजा दिग्भ्रान्तः इव निर्निमेषदृष्ट्या विनोदं पश्यति।

हासः क्रियया प्रदर्शनीयः इति बहुधा प्रयत्नं कृतवान् विनोदः। किन्तु हासं प्रदर्शयितुं तेन न शक्तम्।

"महाराज! भवद्भिः ज्ञानभूमिवासिभिः महता प्रयत्नेन बहु साधितं स्यात्। किन्तु तेन किं प्रयोजनम्? अहं चिन्तयामि – भवन्तः दुरदृष्टपिशाचेन ग्रस्ताः इति। यदि अहम् एव एतस्य राजा स्यां तर्हि नक्षत्रध्वंसादिप्रयोगान् परित्यज्य निर्मलहासप्रकटनसमर्थां शक्तिं सम्पादयितुम् उद्युक्तः भवेयम्। हासः तादृशः अपूर्वः। सः सुलभलभ्यः महोपकारी च। तत्सदृशी शक्तिः अन्या नास्ति एव" इति आवेशेन उक्तवान् विनोदः।

विनोदस्य वचने प्रामाणिकता स्फुटं दृश्यते स्म। अतः तद्वचने महाराजस्य विश्वासः उत्पन्नः। सः क्षणकालं मौनं स्थितवान्।

तदा तद्भवनशिखरस्थः पीतवर्णमयः दीपः प्रकाशमानतां गतः। समनन्तरम् एव निरन्तरघण्टानादः अपि श्रुतः। 'किमेतत्?' इति दृष्टिसङ्केतेन एव पृष्टवान् विनोदः।

"एतस्य अर्थः – नूतनः शोधः फलितः इति। प्रायः मनोदर्पणप्रयोगः एव फलितः स्यात्" इति विनोदम् उक्तवान् राजा।

राजा विनोदः च तस्मात् शिखरभवनतः बहिः आगतवन्तः। द्वारं स्वयं पिहितम् अभवत्। सोपानानि आरुह्य आगच्छतः कस्यचित् पादध्वनिः ताभ्यां श्रुतः। विनोदं निलीय स्थातुं सङ्केतेन सूचितवान् राजा।

"महाराज! मनोदर्पणप्रयोगः फलितः!" इति वदन्तौ उभौ पण्डितौ वस्त्रेण आच्छादितम् एकं दर्पणं महाराजाय दत्त्वा- "कञ्चित् पुरुषं मनसि स्मृत्वा तदीयनामजपपूर्वकम् एतस्य दर्पणस्य मार्जनं त्रिवारं कृत्वा दर्पणे दृष्टं चेत् सः भवतः विषये किं चिन्तयन् अस्ति इति विषयः ज्ञायते।



भवान् एतस्य सामर्थ्यं परीक्षितुम् अर्हति" इति सन्तोषेण उक्तवन्तौ।

"महान् सन्तोषः! भवतां प्रयत्नः फलितः इति वयं नितरां सन्तुष्टाः। सर्वप्रथमम् अस्माकं श्रेयोभिलाषिणः अर्चकस्य मनसि किम् अस्ति इति पश्याम तावत्" इति वदन् राजा मनोदर्पणस्य वस्त्रावरणम् अपसारयितुम् उद्युक्तः।

"तिष्ठतु!" इति आज्ञास्वरेण उच्चैः वदन् तत्र आगतः अर्चकः साग्रहम् उक्तवान्-"एषः मनोदर्पणः सर्वप्रथमं मया एव प्रयोक्तव्यः। अनन्तरकाले अपि सः अर्चकस्य मम अधीने एव भवेत्। महाराजः यदा इच्छति तदा मम अनुमतिं प्राप्य उपयोक्तुम् अर्हति" इति।

तदा कामपि प्रतिक्रियां प्रकटयितुम् अशक्तः राजा मौनं स्थितवान्।

"एतस्य मनोदर्पणस्य उपयोगे सर्वाधिकारः महाराजस्य भवतः एव इति कदापि मा विस्मरतु। अर्चकस्य मनसि सद्यः किम् अस्ति इति प्रथमं जानातु महाराज!" इति वदन् निलीय स्थितः विनोदः राजसमीपम् आगतवान्।

"एतत् असाध्यम्। सर्वथा असाध्यम्" इति आक्रोशनं कुर्वन् अर्चकः महाराजस्य हस्ते स्थितं दर्पणं स्वायत्तीकर्तुम् उद्युक्तः जातः। तदा विनोदः अग्रे आगत्य तयोः मध्ये स्थित्वा अर्चकं ततः अपसारितवान्।

अत्रान्तरे राजा मनोदर्पणस्य आवरणम् अपसार्य अर्चकस्य नाम स्मरन् तदेव त्रिवारम् उक्त्वा हस्तेन दर्पणं त्रिवारं मार्जयित्वा दृष्टवान्।

तत्रस्थं दृश्यं दृष्ट्वा क्रुद्धः राजा कम्पमानः दर्पणं पार्श्वे क्षिप्त्वा विद्युद्वेगेन खड्गं हस्ते स्वीकृत्य एकेन एव प्रहारेण अर्चकस्य शिरच्छेदं कृतवान्।

"कीदृशम् अकार्यं कृतवान् भवान्!" इति उद्गारं प्रकटितवान् दिग्भ्रान्तः विनोदः।

"आं, मया किमपि कृतम्। किं कुर्वन् अस्मि इति मया एव न ज्ञातम् आसीत्" इति उद्गारं प्रकट्य उद्वेगं किञ्चित् शमयित्वा पुनः उक्तवान् महाराजः- "यदा मया दर्पणे दृष्टं तदा एषः अर्चकः विकाररूपेण दन्तान्



प्रदर्शयन् मम शिरसः छेदार्थं खड्गम् उन्नीय आगच्छन् आसीत्। एतत् चित्रं वास्तविकम् एव इति मन्यमानः अहम् आत्मरक्षणार्थं खड्गप्रयोगं कृतवान्। एषः गतप्राणः जातः'' इति। अनन्तरं पार्श्वे पतितं तदीयं शिरः पश्यन् ''हन्त!'' इति विषादं प्रकटितवान् च।

''मनोदर्पणः सूचयति यत् एषः अर्चकः भवतः मारणं चिन्तयन् आसीत् इति। एतत् भवान् न जानीयात् इति उद्देशेन एव प्रायः सः अर्चकः भवतः हस्ततः तं मनोदर्पणं स्वायत्तीकर्तुम् उद्युक्तः आसीत्'' इति आश्चर्येण उक्तवन्तौ पण्डितौ।

''किम् एतत् आश्चर्यम्! मया दर्पणे यथा दृष्टं तथा एषः अर्चकः मम गुप्तशत्रुः आसीत् वा!'' इति स्वगतम् उद्गारं प्रकटितवान् महाराजः।

''मनोदर्पणः असत्यं न कथयति खलु? आवश्यकं चेत् भवान् पुनः परिक्षितुम् अर्हति'' इति उक्तवन्तौ तौ पण्डितौ। पतितः अपि दर्पणः अभग्नः एव आसीत्।

''उत्तमा सूचना''- इति वदन् महाराजः विनोदं पश्यन् – ''भवान् मानवाकारेण स्थितः राक्षसः इति, अस्माकम् अहितं साधनीयम् इति उद्देशेन अत्र आगतः इति च अर्चकः तदा तदा वदति स्म। तत्र सत्यांशः कियान् अस्ति इति इदानीं पश्यामि तावत्'' इति वदन् दर्पणम् उन्नीय नेत्रे निमील्य विनोदं स्मरन् नामोच्चारणपूर्वकं मार्जयन् दर्पणे दृष्टवान्।

आश्चर्यं सन्तोषं च अनुभवन् सः विनोदस्य दिशि परिवृत्य ''भवान् ज्ञानभूमिम् अतिक्रम्य गच्छन् कश्चन पथिकः। प्रयाणस्य निर्विघ्नतासम्पादनार्थं भवान् अस्माकं साहाय्यम् अपेक्षते। अस्माकम् अहितं साधनीयम् इति दुरुद्देशः शत्रुता वा भवति नास्ति। प्रत्युत हितमेव साधयन् भवान् 'अस्माकं हितकाङ्क्षी एव संवृत्तः'' इति वदन् विनोदस्य स्कन्धे प्रीत्या हस्तं स्थापितवान्।

विनोदः आनन्दाश्रूणि स्रावहन् विनयेन उक्तवान् – ''महाप्रभो! मया यानि वचनानि वक्तव्यानि आसन् तानि भवतः मुखात् एव आगतानि। विशेषवरप्राप्त्यर्थं मया एतां ज्ञानभूमिम् अतिक्रम्य गन्तव्यम् अस्ति।

तदर्थं वस्तुतः अपि भवतः साहाय्यम् अपेक्षितम्। अत्र आगमनानन्तरम् एतत् वक्तुं मया अवकाशः एव न प्राप्तः आसीत्" इति।

राजा क्षणकालस्य मौनानन्तरं हस्तसङ्केतेन पण्डितौ ततः गन्तुं सूचितवान्। तयोः गमनानन्तरं सः विनोदम् उक्तवान्- "ज्ञानभूमेः अनन्तरं स्थितं प्रदेशम् अस्मासु कोऽपि न गतवान्। किन्तु सः कीदृशः प्रदेशः इति अहं जानामि। तस्य प्रदेशस्य ज्ञानभूमेः च मध्ये घोरः विषवायुः वाति। अतः कोऽपि जीवी तत्र गन्तुं न शक्नोति" इति।

"महाराज! विषवायुम् अतिक्रम्य गमने साहाय्यं कर्तुं समर्थः भवान् एकः एव इति मम अन्तरङ्गं वदति" इति उक्तवान् विनोदः।

राजा क्षणकालम् आलोचनामग्नः आसीत्। अनन्तरं सः विनोदं उक्तवान्- "अहं येन प्रकारेण साहाय्यं कर्तुं शक्नोमि इति निरूपयतु तावत्" इति।

"भवता काचित् विद्या ज्ञायते खलु, यस्याः च साहाय्येन शक्तितरङ्गरूपं प्राप्य कोऽपि उद्दिष्टे स्थले प्रत्यक्षं भवितुम् अर्हति? तस्याः विद्यायाः रहस्यं मां बोधयतु। तेन मम इष्टसिद्धिः भविष्यति। न निराकरणीयं कृपया" इति उक्तवान् विनोदः। राजा पुनः अपि आलोचनायां निमग्नः।

"महाराज! यदि अहं मम प्रयत्ने जयशाली



स्यां तर्हि ज्ञानभूमिनिमित्तं हासरूपं वरम् अपि आनेष्यामि। तेन महान् उल्लासः प्राप्यते। अत्युपकारकं वरं तत्" इति उक्तवान् विनोदः।

"हासरूपं वरम् आनेष्यति? वस्तुतः हासः नाम कीदृशः इति इदानीम् अपि मया न ज्ञायते। तथापि सः सुखस्य आकरः इति भवतः कथनात् जानामि। किन्तु भवान् यं विषयं ज्ञातुम् इच्छति स च अत्यमूल्यः। अतः एव अहम् आलोचनामग्नः अस्मि। तां विद्याम् अस्यां ज्ञानभूमौ अहं जानामि, स च पूजकश्च जानाति स्म। तादृशं रहस्यं तत्" इति उक्तवान् महाराजः।

"ये पण्डिताः तत् रहस्यम् अन्विष्टवन्तः ते अपि जानीयुः किल?" इति सन्देहेन पृष्टवान्

विनोदः।

"आं, ते पण्डिताः अपि जानन्ति स्म। किन्तु ते इदानीं तस्य प्रयोगं कर्तुं न अर्हन्ति" इति उक्तवान् राजा।

"यतः तेभ्यः रहस्यं ज्ञात्वा तान् मारितवान् स्यात् खलु अर्चकः? मया उक्तं सत्यं खलु?" इति परितापेन उक्तवान् विनोदः।

शिरश्चालनपूर्वकम् अङ्गीकृत्य महाराजः उक्तवान्- "तत् अस्तु तावत्। तद्विषये कालान्तरे कथयिष्यामि" इति। विनोदः मौनम् आश्रितवान्।

तत् रहस्यं बोधनीयं वा न वा इति निर्णेतुं महाराजेन सप्ताहावधिकः कालः स्वीकृतः। तदभ्यन्तरे युवराजः विनोदस्य आत्मीयः स्नेहितः जातः आसीत्।

एकदा विनोदः युवराजम् उक्तवान्- कीदृशं सुन्दरं मुखं भवतः! किन्तु हा हन्त! तत्र हासः एव नास्ति! हासस्य स्वरूपं प्रदर्शयितुम् अपि अहं न शक्नोमि। यतः शापग्रस्तायाम् अस्यां ज्ञानभूमौ हासः एव न उत्पद्यते" इति।

राजा अपि एतत् श्रुतवान्। सः युवराजं विनोदं च आत्मना सह आगन्तुं सूचयित्वा ताभ्यां सह ज्ञानभूमेः सीमाप्रदेशं गतवान्।

तत्र सः विनोदम् अदृश्यताप्राप्तिमन्त्रस्य रहस्यं बोधयित्वा उक्तवान्-"भोः, अदृश्यतां प्राप्य तस्याम् एव स्थितौ दीर्घकालं न स्थातव्यम्। विषवायुम् अतिक्रम्य अविलम्बेन निजरूपं प्राप्तव्यम्। अदृश्यरूपेण बहुकालं स्थितिः अपायकारिणी एव। शक्तितरङ्गाः विकीर्णाः चेत् सर्वनाशः एव भविष्यति। अतः एतद्विषये सदा जागरूकतया भवितव्यम्" इति।

अनन्तरं विनोदः अदृश्यतां प्राप्तुम् इच्छन् गमनार्थं महाराजस्य युवराजस्य च अनुमतिं प्रार्थितवान्। तयोः अङ्गीकारानन्तरं महाराजेन उपदिष्टस्य मन्त्रस्य बलेन विनोदः उन्नतं प्रदेशं गत्वा शक्तितरङ्गारूपं प्राप्य अदृश्यः भूत्वा वायौ निलीनः अभवत्।

(अनुवर्तते)






# गर्वभङ्गः

**श**ववहनम् एव जीविका इति भावयन् इव त्रिविक्रमः पुनः अपि वृक्षस्य समीपम् आगतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवम् अधः अवतार्य स्कन्धे आरोप्य मौनं श्मशानं प्रति प्रस्थितवान्। तदा शवान्तर्गतः वेतालः अवदत्— "अये राजन्! भवतः कार्यश्रद्धा वस्तुतः अपि श्लाघनयोग्या एव। किन्तु मम अत्र संशयः यत् कार्यसमाप्तेः अनन्तरं भवान् श्रमानुगुणं फलं प्राप्नुयात् वा न वा इति। यतः कदाचित् कार्यस्य फलं तथा विपरिणतं भवति, येन बुद्धिमान् अपि पुरुषः सङ्कटे पतति। अत्र उदाहरणरूपेण महापण्डितस्य कवेः सुनीलस्य कथां श्रावयामि। कथायाः नीतिः स्वविषये अपि अन्वेति वा इति पश्यतु। कथां शृण्वतः गच्छतः भवतः मार्गायासः तु निश्चयेन परिहृतः भवेत् एव" इति।

अनन्तरं वेतालेन कथा आरब्धा—

## वेतालकथा



पूर्वं ज्ञानसागरः नाम पण्डितः आसीत्। तस्य पुत्र्याः नाम ललिता इति। अन्यत् अपत्यं नास्ति तस्य।

कदाचित् सुनीलनामकः युवकः विद्याभ्यासार्थं ज्ञानसागरस्य समीपम् आगतवान्। ज्ञानसागरः कैश्चित् प्रश्नैः सुनीलस्य योग्यतां परिशीलितवान्। अनन्तरम् 'एषः मम शिष्यः भवितुं योग्यः' इति निश्चित्य तं स्वशिष्यगणे योजितवान्।

मेधावी सुनीलः ज्ञानसागरस्य सेवां श्रद्धया कुर्वन् विद्याभ्यासम् अपि श्रद्धया कुर्वन् अल्पे एव काले विशेषज्ञानं सम्पादितवान्। सर्वेषु शास्त्रेषु अपि परिणतिं प्राप्य गुरोः प्रीतिम् अपि सम्पादितवान्।

विद्याभ्याससमाप्तेः अनन्तरं सुनीलः निश्चितवान् यत् पाण्डित्यबलेन राजाश्रयः प्राप्तव्यः इति। 'निर्गमनतः पूर्वं गुरुदक्षिणां समर्प्य गुरोः अनुग्रहं प्राप्य गन्तव्यम्' इति आलोच्य सः ज्ञानसागरस्य समीपं गत्वा स्वकीयम् अभिप्रायं निवेदितवान्।

ज्ञानसागरः सुनीलस्य वचनं श्रुत्वा मन्दहासपूर्वकम् उक्तवान्— "भवान् एवं पृच्छति इति मया पूर्वम् एव ऊहितम् आसीत्। एवं प्रश्नः उचितः अपि" इति।

क्षणकालस्य मौनानन्तरं सः सुनीलं पृष्टवान्— "वत्स! अहं यत् पृच्छामि तत् गुरुदक्षिणारूपेण ददाति वा? किं भवति विश्वसिमि?" इति।

"गुरुदेव! भवता पृष्टं मम सामर्थ्यबाह्यं यदि न स्यात् तर्हि अहं तत् अवश्यं दास्यामि एव। अत्र भवतः सन्देहः एव मास्तु। भवतः इच्छां प्रकटयतु तावत्" इति विनयेन उक्तवान् सुनीलः।

शिष्यस्य विनयेन तृप्तः ज्ञानसागरः उक्तवान्— "मम अन्या काऽपि इच्छा नास्ति। बृहस्पतिसमः भवान् मम पुत्रीं ललितां यदि परिणयेत् तर्हि अहं कृतार्थः भवेयम्। एताम् एव गुरुदक्षिणाम् अहं भवत्तः इच्छामि" इति।

तदा व्याकुलस्वरेण सुनीलः पृष्टवान्— "कीदृशी अग्निपरीक्षा मम पुरतः उपस्थापिता गुरुवर्य! अहं भवन्तं पितृसमानं,

भवतः पुत्रीं सोदरीसमानं च पश्यामि। सोदर्याः विवाहः किं शास्त्रेण अनुमतः? शास्त्रविरुद्धं कर्म किं मया करणीयम्?" इति।

तदा ज्ञानसागरः– "वत्स! सुनील! गुरुपुत्री न परिणेतव्या इति शास्त्रे कुत्रापि लिखितं नास्ति। विवाहतः पूर्वं सर्वाः कन्यकाः भगिनीसमानाः एव भवन्ति। तादृशीषु एका एव खलु परिणीयते?" इति तर्कम् उपस्थापयन् इतरैः अपि उदाहरणैः वादं दृढीकुर्वन् सुनीलस्य अङ्गीकारार्थं बहुधा प्रयत्नं कृतवान्।

महत्याः चर्चायाः अनन्तरम् अपि सुनीलः ललितां परिणेतुं न अङ्गीकृतवान्। एतेन ज्ञानसागरः अतीव कुपितः जातः।

सः कमण्डलोः जलं हस्ते स्वीकृत्य– "अये सुनील! भवतः एतावान् अहङ्कारः इति मया अद्यावधि न ज्ञातम् आसीत्। गुरुणा मया पृष्टा गुरुदक्षिणा न दत्ता इत्यतः भवता अधीता विद्या समग्रतया विस्मृता भवतु। भवान् सामान्यः इव जीवतु। निर्गच्छतु इतः" इति शापं दत्तवान्।

गुरोः शापं श्रुत्वा सुनीलः अतीव दुःखितः। सः अश्रूणि स्रावयन् गुरोः पादयोः पतित्वा– "सोदरीसमानां ललिताम् अहं कदापि परिणेतुं न शक्नोमि। अतः भवतः शापम् एव सन्तोषेण स्वीकरोमि" इति उक्त्वा विषादेन ततः निर्गतवान्।

एवं ततः निर्गतः सुनीलः कानिचन दिनानि यावत् उन्मत्तः इव देशे सर्वत्र अटितवान्।





अन्ते सः श्रीरङ्गपट्टनं प्राप्तवान्। श्रीरङ्गनाथदेवालये देवस्य पुरतः मूर्च्छितः अभवत्।

तत्समये कृष्णमूर्तिः नाम महापण्डितः देवदर्शनार्थं देवालयम् आगतवान् आसीत्। सः सुनीलस्य परिस्थितिं दृष्ट्वा अतीव खिन्नः। शिष्याणां साहाय्येन सः सुनीलं स्वगृहं नीतवान्। शैत्योपचारं कृत्वा व्यजनेन वीजितवान्। यदा सुनीलः सचेतनः जातः तदा क्षीरं पायितवान्। खादनार्थं फलादिकम् अपि दत्तवान्।

सुनीलः निद्रातः उत्थितः इव आश्चर्येण परितः परिशीलितवान्। तत्समये कृष्णमूर्तेः शिष्याः केचन गृहस्य पुरतः उपविश्य रङ्गनाथस्य स्तोत्रं मधुरेण स्वरेण गायन्तः आसन्। भक्तिरसमये अस्मिन् परिसरे सुनीलस्य मनः विकसितम् अभवत्। तदीयाः स्थायिभावाः जागरिताः। सः स्फूर्त्या आशुकवितां वक्तुम् आरब्धवान्।

भक्तिरसेन प्रेरितः सः एकां घण्टां यावत् आशुकवितां गायन् आसीत्। अनन्तरं श्रान्तः सः उपवेष्टुम् अशक्तः सन् तत्रैव कृष्णमूर्तेः पादमूले पतितवान्।

पदलालित्येन, पदपाकेन, अर्थगाम्भीर्येण च युक्तानां गीतानां श्रवणेन कृष्णमूर्तिः तच्छिष्याः च आनन्दसागरे निमग्नाः आसन्।

यदा सुनीलः श्रान्त्या पतितवान् तदा सम्भ्रान्तः कृष्णमूर्तिः प्रथमोपचारेण तस्मिन् नवचैतन्यं पूरितवान्। सुनीलः नेत्रे उन्मील्य कृष्णमूर्तिं विनयेन नमस्कृत्य पृष्टवान्– "श्रीमन्! अहम् अत्र कथम् आगतवान्? महापापी भाग्यहीनः अहं केन पुण्येन एतत् पवित्रं स्थलम् आगतवान्? मम उपचारं कुर्वन् महात्मा कः भवान्?" इति।

कृष्णमूर्तिः प्रवृत्तं समग्रं निवेद्य– "भवान् कः? कुतः आगतवान्? भवता भगवतः रङ्गनाथस्य विषये यानि पद्यानि रचितानि तानि शृण्वतः मम जन्म सार्थकं मन्ये। सरस्वतीपुत्रस्य भवतः एतादृशी दुरवस्था कथम् आगता?" इति पृष्टवान्।

"किं भवान् वदति? मया रङ्गनाथस्य स्तुतिपूर्वकं पद्यानि रचितानि इति? किम् एतत् सत्यं वा?" इति पृष्टवान् सुनीलः।

कृष्णमूर्तिः हसन्— "अहम् असत्यं किमर्थं वदेयम्? भवतः मुखात् आरम्भे द्वित्राणि पद्यानि श्रुत्वा आश्चर्यचकितः अहम्। अनन्तरं शिष्याणां द्वारा भवता उक्तानि सर्वाणि पद्यानि लेखितवान् अस्मि। भवान् एव पश्यतु" इति उक्त्वा शिष्याणां हस्ते स्थितानि ताडपत्राणि सुनीलस्य पुरतः स्थापितवान्।

सुनीलः आत्मना रचितानि पद्यानि पठन् आनन्दाश्रूणि स्रावितवान्। गुरुणा दत्तः शापः निष्फलः जातः आसीत् इदानीम्।

"भोः! भवान् आत्मनः परिचयम् एतावता अपि न उक्तवान् एव" इति उक्तवान् कृष्णमूर्तिः।

तदा सुनीलः आत्मनः वृत्तान्तं कृष्णमूर्तये निवेदितवान्।

"एवम् अस्ति वा भवतः कथा? अस्तु तावत्। कानिचन दिनानि भवान् मम गृहे तिष्ठतु। इदानीं स्नानार्थम् उत्तिष्ठतु। भोजनानन्तरं विस्तरेण वार्तालापं करवाव" इति उक्तवान् कृष्णमूर्तिः।

एवं कथयतः कृष्णमूर्तेः मुखे पूर्वतनः प्रशान्तभावः न दृश्यते इति अंशं सुनीलः लक्षितवान्। तथापि तद्विषये विशेषतः न चिन्तितवान् सः।

भोजनानन्तरं सुनीलः कृष्णमूर्तेः समीपम् आगत्य— "श्रीमन्! एतस्य देशस्य शासकस्य नाम किम्? सः पण्डितान् आदरेण पश्यति वा? तस्य आस्थाने इदानीं समर्थाः पण्डिताः सन्ति वा?" इति पृष्टवान्।





तदा कृष्णमूर्तिः उक्तवान्– "भोः, तादृशान् विषयान् अहं समये स्वयं भवन्तं कथयिष्यामि। इदानीं गत्वा किञ्चित् विश्रान्तिसुखम् अनुभवतु" इति।

अनन्तरदिनतः सुनीलः कञ्चित् विषयम् अवलम्ब्य आशुकवितां रचयितुम् आरब्धवान्। किन्तु आश्चर्यं नाम एवं रचितासु कृतीषु माधुर्यं, पदलालित्यम् अर्थगाम्भीर्यं च न्यूनीभवत् आसीत्। अनन्तरदिनेषु रसपुष्टिः तु दूरे तिष्ठतु, अर्थसाङ्गत्यम् अपि लुप्तम् अभवत्। तस्य कवितां शृण्वत्सु शिष्येषु सुनीलविषयिणी जुगुप्सा उत्पन्ना। आत्मनि जातं परिवर्तनं सुनीलः अपि किञ्चिदिव लक्षितवान्।

एकदा कृष्णमूर्तेः शिष्ययोः मध्ये एतद्विषये वार्तालापः प्रवर्तमानः आसीत्। तं वार्तालापं सुनीलः अपि श्रुतवान्।

"एषु दिनेषु अत्र आगतस्य सुनीलस्य व्यवहारे महान् अहङ्कारः दृश्यते खलु?" इति पृष्टवान् एकः।

"आम् आम्। आरम्भे तु, रङ्गनाथस्य दयया इति भाति, अपूर्वाणि पद्यानि तस्य मुखतः आगतानि। इदानीं तु सः शुष्कान् दोषभूयिष्ठान् च श्लोकान् रचयन् अस्ति। केनचित् उन्मादेन आवृतः इव भाति सः" इति उक्तवान् अपरः शिष्यः।

"परह्यः गुरवः मम समीपे उक्तवन्तः यत् एषः सुनीलः आत्मानं श्रेष्ठं मन्यते, तेन इतोऽपि स्वस्वरूपज्ञानं न प्राप्तम् इति। वस्तुतः एतत् सत्यम् एव" इति उक्तवान् प्रथमः शिष्यः।

एतस्य सम्भाषणस्य श्रवणेन सुनीलस्य अन्तरङ्गे विचारमथनम् आरब्धम्।

अन्ते सः कृष्णमूर्तेः समीपं गत्वा साष्टाङ्गं नमस्कृत्य– "श्रीमन्! सूक्ष्मातिसूक्ष्मं धर्मस्वरूपं मया ज्ञातुं न शक्तम्। भवतः दयया मयि विवेकः उदितः। अहम् एकवारं गुरोः समीपं गत्वा आगन्तुम् इच्छामि। आशीर्वादपूर्वकम् अनुमतिदानेन अहम् अनुग्रहणीयः" इति प्रार्थितवान्।

वेतालः एवं कथां समाप्य अपृच्छत्– "भोः राजन्! आत्मनः मुखात् आशुपद्यानि यानि निर्गतानि तेषां कारणतः सुनीलः गर्वितः

जातः इत्येव भावयाम, तथापि तस्य कविताशक्तेः क्षये किं कारणम्? सुनीलाय ज्ञानसागरेण दत्तः शापः कुतो वा न फलितः? ज्ञानसागरसमीपं गन्तव्यम् इति सुनीलः यत् चिन्तितवान् तत्र किं वा कारणम्? एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा त्रिविक्रमः उक्तवान्– "वस्तुतः सुनीलस्य गर्वस्य कारणम् आत्मनः कवित्वं न। गुरुणा दत्तः शापः मम विषये न फलितः इति भावयतः तस्य मनसि अहङ्कारः उत्पन्नः। सः वस्तुस्थितिं ज्ञातुम् एव न शक्तवान्। वस्तुतः तु ज्ञानसागरस्य शापस्य निष्फलतायाः कारणं ज्ञानसागरस्य दौर्बल्यम् एव, न तु सुनीलस्य श्रेष्ठत्वम्। 'मम पुत्री परिणेतव्या' इति ज्ञानसागरेण सामान्यरूपेण प्रष्टव्यम् आसीत्। किन्तु सः तत् गुरुदक्षिणारूपेण, तदपि निर्बन्धतया, आज्ञास्वरेण, दर्पेण च पृष्टवान्। वस्तुतः तेन सुनीलस्य उत्तरं सहृदयतया अङ्गीकरणीयम् आसीत्। पितृवत्, धर्मगुरुवत् सुनीलः आशिषा अनुग्रहणीयः आसीत् च। एवम् अकृत्वा सः क्रोधावेशेन शपन् दोषभाक् अभवत्। अतः एव तदीयः शापः न फलितः। एषा वस्तुस्थितिः कृष्णमूर्तिना अपि लक्षिता। किन्तु सुनीलः न लक्षितवान्। आत्मानं धर्मस्वरूपिणं भावयन् सः गर्वेण व्यवहृतवान्। आत्मनः श्रेष्ठत्वकारणतः एव गुरोः शापः न फलितः इति आलोच्य गुरौ लघुतां प्रदर्शितवान्। तत्कारणतः एव तदीया अपूर्वा आशुकविताशक्तिः नष्टा अभवत्। अन्ते सः वस्तुस्थितिं ज्ञातवान्। 'ज्ञानसागरः क्षमां प्रार्थनीयः येन मया आचरितः लोपः दूरीकृतः भवेत्' इति आलोच्य सः ज्ञानसागरसमीपं गतवान्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



# आत्मनः दोषः

कस्मिंश्चित् ग्रामे कश्चन ग्रामाधिकारी आसीत्। सः उत्कोचग्रहणे अतीव निपुणः। यः उत्कोचम् अधिकं ददाति तत्परतया एव: न्यायनिर्णयं श्रावयति।

एवं सः अन्याय्येन मार्गेण धनं सम्पादयति इत्यतः तस्य पुत्रः अपि दुर्व्ययी जातः। दुर्व्यसनानि अपि सः अभ्यस्तवान्। एतदर्थं सः गृहे चौर्यम् अपि करोति। किन्तु एतत् चौर्यं गृहसदस्यः कोऽपि न जानाति।

एकदा ग्रामाधिकारी यदा निद्रायाम् आसीत् तदा एषः पुत्रः पितुः कोषात् धनं चोरयितुम् उद्युक्तः, पित्रा बद्धः च।

स्वगृहे स्वपुत्रः एव चौर्यं कुर्वन् अस्ति इति ज्ञातवतः ग्रामाधिकारिणः महदाश्चर्यम्।'

सः कोपेन पुत्रं पृष्टवान्– "ग्रामाधिकारी अहम् एवं चौर्यं कृतवन्तं कथं दण्डयामि इति जानाति वा?" इति।

"कस्मात् अपराधतः विमोचनं प्राप्तुम् ग्रामाधिकारिणे भवते उत्कोचरूपेण कियत् धनं दातव्यम् इति अहं सम्यक् जानामि" इति वदन् पितुः हस्ते रूप्यकद्वयं स्थापयित्वा ततः पलायितवान् सः पुत्रः।

पुत्रेण दत्तेन आघातेन विवेकं प्राप्तवान् ग्रामाधिकारी। 'वस्तुतः लोपः मयि एव अस्ति। मम दुर्व्यवहाराणां प्रभावतः एव मम पुत्रः एवं जातः' इति आत्मनः दोषं ज्ञातवान् सः।

तद्दिनतः सः उत्कोचस्वीकरणं परित्यक्तवान्।





काव्यकथा -

# शकुन्तला-२

धर्मस्वरूपिणः दुष्यन्तस्य विषये कण्वस्य विशेषादरः आसीत्। अतः शकुन्तलया निवेदितं श्रुत्वा सन्तुष्टः कण्वः शकुन्तलाम् आशिषा अनुगृह्य राजान्तःपुरे कथं भवितव्यम् इति विषये तां बहुधा बोधितवान्।

एकदा कण्वः आश्रमात् निर्गतः आसीत्। शकुन्तला एकान्ते दुष्यन्तं ध्यायन्ती परवशा आसीत्। तत्समये तत्र आगतः दुर्वासाः "कण्वः कुत्र?" इति पृष्टवान्। अन्यासक्ता शकुन्तला दुर्वाससः आगमनं न लक्षितवती। शकुन्तलायाः मौनेन शीघ्रकोपी दुर्वासाः कुपितः सन् शापं दत्तवान्- "यं ध्यायन्ती भवती मम विषये औदासीन्यं प्रकटितवती सः भवतीं विस्मरतु" इति।





मुनेः शापवाक्यानि अपि शकुन्तलया न श्रुतानि। किन्तु आश्रमवासिन्यः मुनिकन्यकाः तानि श्रुतवत्यः। भीताः ताः दुर्वाससः पादयोः पतित्वा 'निरपराधिनी शकुन्तला क्षन्तव्या' इति प्रार्थितवत्यः। तेन शान्तः मुनिः "मम शापः शाश्वतिकः न भविष्यति" इति अनुगृह्य ततः निर्गतवान्।



केषाञ्चित् दिनानाम् अनन्तरं कण्वः शकुन्तलां दुष्यन्तसमीपं प्रेषयितुं सन्नाहम् आरब्धवान्। शकुन्तला सखीनाम् अनुमतिं प्राप्य पितरम् अन्यान् ज्येष्ठान् च नमस्कृत्य हस्तिनापुरं प्रति प्रस्थितवती। कण्वस्य शिष्यः कश्चित् रक्षकत्वेन तया सह प्रस्थितवान्।

जन्मस्थलम् अनुरागस्य मूर्तिमद्रूपं कण्वं च त्यक्त्वा गन्तुम् अनिच्छन्ती शकुन्तला एकत्र अश्रूणि स्रावयति। अपरत्र दुष्यन्तस्य मधुरं सान्निध्यं स्मरन्ती पुलकिता भवति। तस्याः प्रयाणं निर्विघ्नतया प्रवृत्तम्।





शकुन्तला महता उत्साहेन दुष्यन्तस्य सभां प्रविष्टवती। दुष्यन्तः तां दृष्ट्वा अपि मौनं स्मितवान् एतत् दृष्टवत्याः शकुन्तलायाः तु महद् आश्चर्यम्! तया सह आगतः मुनिकुमारः दुष्यन्तम् उक्तवान्— "महाराज! एषा कण्वमहर्षिणा पालिता पुत्री शकुन्तला" इति।

"एवं वा? मत्तः किमपि साहाय्यम् अपेक्ष्यते वा? किं निमित्तम् अत्र आगतम्?" इति दुष्यन्तेन पृष्टा शकुन्तला विभ्रान्ता। तदा मुनिकुमारः एव व्यक्तम् उक्तवान्– "महाराज! शकुन्तलाम्, एतां विस्मृतवान् वा? कण्वाश्रमे एषा खलु भवता गान्धर्वविधिना परिणीता?" इति।





"हे भगवन्! मां निन्दापात्रं कर्तुम् एते आगतवन्तः इति भाति" इति उद्गारं प्रकट्य दुष्यन्तः कोपेन उक्तवान्– "मम पुरतः अपह्नं वदतः भवतः कियत् धैर्यम्? किं मम उपरि मिथ्यारोपं करोति? गौरवपूर्वकम् इतः न निर्गतं चेत् दण्डनम् अनुभोक्तव्यं भवेत्" इति।

'विवाहसमये एतेन दत्तम् अङ्गुलीयकं प्रदर्शितं चेत् एषः सर्वं स्मरेत्' इति आलोच्य शकुन्तला अङ्गुलिं दृष्टवती। हा हन्त! तत्र किम् अस्ति? अङ्गुलीयकं तु आश्रमतः नौकायां आगमनसमये जले लीनया अङ्गुलिचालनं यदा कृतं तदा एव कुत्रापि जले पतितम् आसीत्!





शकुन्तला परमलज्जया शिरः अवनमय्य मुनिकुमारेण सह आस्थानतः प्रस्थितवती। दूर्वाससः शापकारणतः दुष्यन्तः शकुन्तलां पूर्णतः विस्मृतवान् आसीत्। राजा एकत्र कुपितः भवति, अपरत्र 'एषा साध्वी एवं वदति किल। अहं तु किमपि न स्मरामि' इति चिन्ताक्रान्तः अपि भवति।

स्वकुमार्याः मुखभङ्गं, तया अनुभूयमानं दुःखं च द्रष्टुम् अशक्ता मेनका स्वर्गतः भूलोकम् आगत्य शकुन्तलां प्रीत्या आलिङ्गितवती। तां सुरक्षितम् एकम् आश्रमप्रदेशं प्रापितवती च।





आश्रमे शकुन्तला सुन्दरं पुत्रं प्रसूतवती। तस्य नाम 'भरतः' इति निश्चित्य प्रीत्या तं पालितवती शकुन्तला। भरतः विवेकी, बुद्धिमान् धैर्यसाहसवान् च सन् प्रतिदिनं वर्धमानः सर्वेषाम् आनन्ददायकः आसीत्।

(आगामिसञ्चिकायां समाप्ता भविष्यति।)




# स्वयंकृतापराधः

चक्रपुरसमीपस्थे अरण्ये कस्यचित् महावृक्षस्य शाखायां कश्चन वृद्धः पिशाचः निवसति स्म। एकस्मिन् दिने मध्यरात्रसमये यदा पिशाचः सुखेन निद्रां कुर्वन् आसीत् तदा वृक्षस्य मूलभागे कोऽपि शब्दः उत्पन्नः। कश्चन युवकः आगच्छन् आसीत्।

सुखमय्याः निद्रायाः भङ्गेन पिशाचः अतीव क्रुद्धः। सः कोपेन गर्जितवान्- "कः सः? पिशाचानां निद्रासमये अत्र अरण्यम् आगच्छन् किं भवान् मरणं प्राप्तुम् इच्छति?" इति।

"आम्। तदर्थम् एव अत्र, तत्रापि अन्धकारे आगतवान् अस्मि। भवान् मिलितः इति तु सन्तोषाय एव। अन्यथा कोऽपि क्रूरः मृगः माम् अखादिष्यत्" इति सधैर्यम् उक्तवान् सः युवकः।

युवकस्य वचनं श्रुतवतः पिशाचस्य आश्चर्यम् अनुतापः चापि। सः वृक्षात् अवतीर्य युवकस्य पुरतः स्थित्वा तं परीक्षादृष्ट्या पश्यन् अपृच्छत्- "इदानीम् एव जीवने विरक्तिः वा? का कथा भवतः?" इति।

तदा युवकः स्वकीयां कथां पिशाचाय निवेदितवान्- "मम नाम मुरारिः इति। अहं तु अतीव कुरूपी खलु? दैवयोगात् मम दृष्टिः सुन्दर्याः विमलायाः उपरि पतिता।

अत्रान्तरे विवाहसम्बन्धम् इच्छन्तः बहवः विमलायाः गृहम् आगच्छन्तः सन्ति इति मया ज्ञातम्। इतः परं विलम्बेन इष्टपूर्तिः न भवेत् इति आलोच्य अहम् एकदा सायङ्काले उद्याने पुष्पाणि अवचिन्वतीं विमलां दृष्टवान्।

तस्याः समीपं गत्वा अहम् उक्तवान्- "भवत्यां मम प्राणसमाना प्रीतिः अस्ति।

"अनामिका"



कृपया मम विवाहम् अङ्गीकरोतु" इति।

मम वचनं श्रुत्वा सा हसन्ती मां स्वगृहस्य अन्तः नीत्वा पुरुषप्रमाणकस्य दर्पणस्य पुरतः स्थातुम् उक्त्वा पृष्टवती— "तत् किम् इति जानाति वा?" इति।

"सः दर्पणः" इति उक्तवान् अहम्।

"एतस्मिन् दर्पणे भवान् कदापि स्वकीयं रूपं न दृष्टवान् एव वा? मम सौन्दर्यस्य भवतः कुरूपस्य च साम्यं सर्वथा न भवति इति विचारः भवतः मनसि न आगतः एव वा? इदानीम् इतः मौनं गच्छतु। किमपि मा पृच्छतु वदतु वा" इति कोपेन उक्तवती विमला।

अहम् अवमानभारेण कुब्जः सन् जीवने एव जुगुप्सां प्राप्य अत्र आगतवान् अस्मि। अत्र कोऽपि क्रूरः मृगः मां खादेत्। उपवासेन वा मरणं प्राप्नुयाम्" इति।

एतत् श्रुत्वा उच्चैः हसन् पिशाचः— "एतावदेव वा? तर्हि चिन्ता मास्तु। भवन्तम् अहं विमलायाः अनुरूपं सुन्दरं करिष्यामि" इति उक्त्वा मुखात् 'उफ् उफ्' इति अग्निज्वालां वमन् मुरारेः शरीरम् अदहत्।

मुरारिः वेदनया आक्रन्दनं कुर्वन् उन्मत्तः इव नर्तनम् आरब्धवान्। तदा पिशाचः मलयजम् इव शीतलं वायुं मुखात् आनीतवान्। हितस्पर्शम् अनुभवन् सः युवकः कौमुदीप्रकाशे स्वशरीरं दृष्टवान्। शरीरे सुवर्णकान्तिः आगता आसीत्। सः समाधानेन तृप्त्या च पिशाचं कृतज्ञतापूर्वकं नमस्कृत्य स्वगृहस्य मार्गम् अनुसृतवान्।

किन्तु आश्चर्यं नाम अनन्तरदिने मध्यरात्रे मुरारिः म्लानवदनः सन् मन्दं पदानि स्थापयन् पिशाचस्य आवासस्थानभूतस्य वृक्षस्य समीपम् आगतवान्।

पिशाचः मुरारिं पश्यन्— "पुनः अपि मम निद्रासमये आगतवान् खलु? किं जातम्? किमर्थम् एवम् अस्ति?" इति प्रश्नम् अकरोत्।

"सुन्दररूपप्राप्त्या केवलया उदरं पूर्यति वा? ऐश्वर्यम् अपि सम्प्रार्थ्य प्राप्य आगच्छतु इति उक्तवती विमला" इति सदैन्यम् उक्तवान् मुरारिः।

"तन्नाम भवान् मम विषये तां समग्रतया

निवेदितवान् खलु?" इति पृष्टवान् पिशाचः।

"कथं वा गोपयेयम्? विमलायाः पुरतः अहं किमपि गोपयितुं न शक्नोमि" इति उक्तवान् मुरारिः।

"एवं वा? अस्तु तावत्। एतत्क्षणे एव ऐश्वर्येण भवन्तम् अनुग्रहीष्यामि। तत् नीत्वा विमलां सन्तोष्य परिणयतु" इति उक्त्वा वृक्षम् आरुह्य सुवर्णनाणकैः पूर्णां गोणीम् आनीय अपातयत्।

मुरारिः तां गोणीम् उन्नीय पिशाचं कृतज्ञतावचनानि वदन् नमस्कृत्य स्वग्रामं प्रति प्रस्थितवान्।

एतदनन्तरायां रात्रौ अपि मुरारिः म्लानवदनः सन् पिशाचवसतिस्थानस्य वृक्षस्य समीपम् आगतवान्। तं दृष्ट्वा पिशाचः अपृच्छत्– "भोः, किम् एतत्? किमर्थम् आगतवान्? भवतः विवाहकारणतः मम निद्रा नास्ति। इदानीं पुनः कीदृशं कष्टम् आपतितम्? मया दत्तम् ऐश्वर्यम् अपर्याप्तम् इति उक्तवती वा विमला?" इति।

मुरारिः आयासेन तत्रैव उपविशन् हस्तेन शिरः गृहीत्वा– "विमला वदति यत् सौन्दर्यम् ऐश्वर्यं च केवलम् अस्ति चेत् न पर्याप्तम्, तदुभयम् अपि सम्यक् उपयोक्तुं बुद्धिमत्ता अपि अपेक्षिता। सा भवति नास्ति। अतः तां बुद्धिमत्तां ददातु इति पिशाचं प्रार्थयतु इति। अत पुनः आगतवान्" इति रुदन् उक्तवान्।

"विमला एतादृशी अविवेकिनी दुरहङ्कारिणी च वा?" इति उद्गारं



प्रकटयन् पिशाचः हसन् वृक्षम् आरोहत्। बलेन वृक्षस्य शाखाः अकम्पयत् च। तत्र पर्णानां वृष्टिः एव जाता।

पर्णैः आच्छन्नः मुरारिः क्षणकालानन्तरं ततः उत्थाय पिशाचं पश्यन्– "मम दोषः कः इति मया इदानीं ज्ञातम्। भवतः अनुग्रहतः युक्तायुक्तविवेकः उदितः। भवतः उपकारम् आजीवनं स्मरामि। इतः परम् अत्र आगत्य भवतः निद्रायाः भङ्गं न करोमि" इति उक्त्वा गृहस्य मार्गम् अनुसृतवान्।

तदनन्तररात्रौ विमला तस्य वृक्षस्य समीपम् आगतवती। तां दृष्ट्वा सः पिशाचः अवदत्– "आगच्छतु विमले! भवती आगच्छेत् इति मया पूर्वम् एव निरीक्षितम् आसीत्" इति।

विमला अश्रूणि स्रावयन्ती प्रार्थितवती– "भवता कः मायाजालः प्रदर्शितः इति न जानामि, मुरारिः पूर्णतः परिवृत्तः अस्ति। ह्यः सः मया सह वार्तालापं न कृतवान्। मम मुखम् अपि न दृष्टवान्। सः स्वपरिचितान् वदति यत् श्वः नगरं गत्वा किमपि वाणिज्यं करिष्यामि इति। भवान् केनापि प्रयत्नेन सः मां यथा परिणयेत् तथा करोतु कृपया" इति।

तदा पिशाचः उच्चैः हसन् अवदत्– "सः मुरारिः पूर्ववत् नास्ति इति प्रथमं जानातु। किम् उचितं, किम् अनुचितम् इति विवेक्तुं सः समर्थः अस्ति। सः इदानी सुन्दरः जातः अस्ति, ऐश्वर्यवान् विवेकी चापि। सः चिन्तितवान् स्यात् भवती आत्मनः योग्या न इति। अन्यां सुन्दरीम् ऐश्वर्यवती विवेकिनीं सः परिणेतुं निश्चितवान् स्यात्। अनुरागवन्तं तं मुरारिं भवती अपमानितवती। तेन खिन्नः सः इदानीम् अन्यां परिणेतुम् इच्छति चेत् किम् आश्चर्यम्? एतत्सर्वं स्वयंकृतस्य अपराधस्य फलम्। एतत्फलम् अवश्यम् अनुभोक्तव्यम्। अहम् अपि अत्र किमपि कर्तुं न शक्नोमि" इति।

विमला लज्जया शिरः अवनमय्य मन्दया गत्या मौनं ततः निर्गतवती।






कृष्णः कालियस्य निवासभूते ह्रदे उत्पतितवान् खलु? एतेन क्षीरसागरे मन्दरपर्वतस्य पतनेन इव ह्रदस्थं जलम् उत्पतितम् अभवत्। महातरङ्गाः तत्र उत्पन्नाः। पातलपर्यन्तम् अपि तरङ्गजनितं कम्पनं गतम्। एतत् दृष्टवतः कालियस्य कोपस्य सीमा एव नास्ति। सः कोपेन पञ्च फणाः अपि विशालं प्रसार्य फूत्कुर्वन्, विषज्वालाम् उद्वमन्, वलयाकारेण सुदीर्घं शरीरं वर्तयन्, दंष्ट्राः यथा दृश्येरन् तथा मुखं सुविशालं प्रसार्य, जिह्वां सुदीर्घं प्रसार्य उपरि आगतवान्। कृष्णस्य शरीरं तत्र तत्र दशन् कृष्णं स्वशरीरेण आवृत्य निष्पीडयितुम् आरब्धवान्। एतेन कृष्णः क्षणकालं मूर्च्छितः जातः। एतत् दृष्ट्वा कालियस्य पत्नीपुत्रादयः कृष्णं परितः आगत्य नृत्यम् आरब्धवन्तः। विषम् उद्वमन्तः कोपावेशेन तं दष्टवन्तः च।

तीरे स्थिताः गोपकुमाराः एतत् दृश्यं दृष्टवन्तः। भीताः ते क्रोशमिते दूरे स्थितं वृन्दावनं प्रति वेगेन धावितवन्तः। वृन्दावनं प्राप्य कष्टेन श्वासोच्छ्वासं कुर्वन्तः समीपस्थान् जनान् उक्तवन्तः– ''भो भोः, नन्दस्य पुत्रः कृष्णः क्रीडातः मध्ये निर्गत्य कमपि अनुक्त्वा यमुनानद्याः ह्रदे प्रवेशं कृतवान्। तस्मिन् एव ह्रदे घोराः सर्पाः निवसन्ति। कश्चन घोरः सर्पः कृष्णम् आपादमस्तकम् आवृत्य स्थितः अस्ति। इतरे अपि सर्पाः तं दशन्तः सन्ति। कृपया एतां वार्तां कोऽपि तस्य मातापितरौ निवेदयतु।



कृष्णस्य रक्षणार्थम् उपायं चिन्तयन्तु। परशुलवित्रादीन् झटिति स्वीकृत्य आगच्छन्तु'' इति।

एतां वार्तां श्रुतवतां जनानां तु वज्राघातः जातः इव। ते 'कुत्र? कुत्र?' इति वदन्तः यत् लब्धं तत् आयुधं हस्तेन स्वीकृत्य यमुनानदीं प्रति धावितवन्तः। नन्दः अपि आश्चर्यं, भीतिं, सम्भ्रान्तिं, दुःखं च अनुभवन् तैः सह धावितवान्। यशोदा तु ''हा पुत्र! हा कृष्ण!'' इति उद्गारं प्रकटयन्ती उच्चैः आक्रन्दनं कुर्वती पतनम् अपि अविगणयन्ती धावितवती। अन्याः गोपिकाः अपि भीतिम् आतङ्कं च अनुभवन्त्यः ताम् अनुसृतवत्यः।

बृन्दावनस्थाः सर्वे यमुनानदीं प्रति धावितवन्तः आसन्। तेषु केचन उद्गारं प्रकटयन्ति— 'हा हन्त! कीदृशी आपत् आपतिता!' इति। अन्ये केचन वदन्ति— ''एषः कृष्णः सदा एवम् एव। किमपि अकार्यं कुर्वन् एव तिष्ठति। आत्मना यत् सर्वथा न शक्यते तत् एव कर्तुम् उद्युक्तः भवति!'' इति।

अपरे केचन वदन्ति— ''महाबलशालिभिः अपि यत् कर्तुं न शक्यते तदेव करोति इत्येव कृष्णस्य वैशिष्ट्यम्। महतीः विपदः अपि सः अनायासेन निवारयति। कालियस्य मरणकालः सन्निहितः इति तु निश्चितम्। कृष्णः तु सकुशलम् आगच्छति। अत्र सन्देहः एव मास्तु'' इति।

एवं परस्परं वदन्तः आगताः जनाः कालिन्दीतीरे स्थित्वा कृष्णस्य दुर्दशां दृष्ट्वा तु स्तब्धाः जाताः। सर्पैः परिवृतः सः शोचनीयायाम् अवस्थायाम् आसीत्। किं करणीयम् इति कोऽपि न जानाति। एतत् घोरं दृश्यं दृष्ट्वा नन्दः यशोदा च मूर्च्छां गतवन्तौ। जनाः शैत्योपचारेण तौ सचेतनौ कृतवन्तः।

सचेतनः नन्दः मन्दस्वरेण विलपितवान्— ''मया तादृशं किं पापम् आचरितं येन सर्पसमूहेन बद्धः दीनावस्थायां स्थितः पुत्रः द्रष्टव्यः आपतितः? जनाः मां पुण्यस्वरूपिणं वदन्ति स्म। 'बलशालिनः सुन्दरस्य पुण्यपुरुषस्य कृष्णस्य पिता' इति मम स्तुतिं कुर्वन्ति स्म। बहून् राक्षसान् बाल्ये एव



मारितवतः कृष्णस्य सर्पेभ्यः विमोचनप्राप्तिः किं कष्टकरी? तथापि किमर्थं तस्य एषा शोचनीया गतिः? किं दुरदृष्टं तं बाधते? यशोदायाः आश्वासनं कथं करोमि? एतत्सर्वं राक्षसानां लीला एव स्यात् वा? कालियद्वारा ते प्रतीकारं साधयन्तः स्युः वा? हा कृष्ण! कीदृशी दुर्गतिः भवतः!" इति।

अपरत्र यशोदा उच्चस्वरेण कृष्णम् उद्दिश्य वदति– "अये कृष्ण! प्रिय वत्स! भवान् यदा नवनीतं चोरितवान् तदा गोपिकाः भवन्तं निन्दन्त्यः आगताः। तासां समाधानार्थम् अहं भवन्तम् उलूखले बद्धवती। तेन कुपितः भवान् इदानीं माम् एवं सन्त्रासयन् अस्ति? राक्षसानां संहारं कुर्वन् भवान् इतः पूर्वं बहुवारं स्वकीयं सामर्थ्यातिशयं प्रदर्शितवान्। एतेषां सर्पाणां मारणं किं कष्टकरं भवतः? अथवा उद्देशपूर्वकं भवान् एवं व्यवहरन् अस्ति? किं मयि भवतः प्रीतिः नास्ति? मां पश्यतु वत्स! मम दुःखम् अवगन्तुं न शक्नोति भवान्? अस्मान् अनाथान् कर्तुम् इच्छति? कृपया त्वरया प्रत्यागच्छतु भोः। भवतः आपदं दृष्टवताम् अस्माकं प्राणाः निर्गताः इव। विषवृक्षमयम् अरण्यम् एव नाशितवतः भवतः एतेषां जलवासिनां सर्पाणां किं कष्टम्? तैः सह किं भवान् क्रीडन् अस्ति? क्रीडां समापयतु, त्वरया प्रत्यागच्छतु च" इति।

नन्दस्य यशोदायाः च विलपनं दृष्टवतां जनानां दुःखम् अपि वर्धते। ज्येष्ठाः वृद्धाः तौ पुत्रौ इव भावयन्तः समाधानवचनानि वदन्ति। अन्ये केचन समाधानवचनानि वदन्तः स्वयम् अपि रोदनं कुर्वन्ति। इतरे केचन विलपन्ति– "इतः परम् अस्माकं जीवनेन किं प्रयोजनम्? वयं सर्वे ह्रदं प्रविश्य सर्पैः सह युद्धं कुर्मः। यदि शक्यं कृष्णस्य विमोचनं साधयामः। अन्यथा युद्धे प्राणान् त्यजामः। कृष्णं विना वृन्दावनं प्रति गमनं दुःशकम् एव" इति।

एतत्सर्वं बलरामः पश्यन् शृण्वन् च आसीत्। अन्ते सः कृष्णं पश्यन् उक्तवान्– "कृष्ण! भवान् मानवस्वभावस्य व्याजं प्रदर्शयन् लोकहितं विस्मृत्य स्वस्वरूपम् अपि विस्मृत्य असहायः इव व्यवहरति खलु? किम्



एतत् लीलानाटकम्? एतस्य अपि कापि मितिः भवेत्। एतान् क्षुद्रान् सर्पान् सम्यक् दण्डयित्वा प्रत्यागच्छतु। सर्वान् सन्तोषयतु च" इति।

अग्रजस्य वचनं श्रुत्वा कृष्णः स्वकीयं स्वरूपं स्मृतवान्। बलेन शरीरं सकृत् विधूय कालियस्य ग्रहणात् विमोचनं प्राप्य उपरि आगतवान्। कालियस्य फणाम् आरुह्य स्थितवान् च। कालियस्य फणासु कन्दुक इव उत्पतन् सः तस्य पुच्छं गृहीत्वा फणासु नर्तनम् आरब्धवान्। तस्य नर्तनानुगुणं यमुनायाः तरङ्गाः अपि नृत्यन्ति स्म। गोपकुमाराः अपि तीरे स्थित्वा हर्षोद्गारं प्रकटयन्तः जयघोषं कुर्वन्ति स्म। एवं तत्र कश्चन नृत्योत्सवः प्रचलति इव भासते स्म।

कालियस्य फणानाम् उपरि कृष्णेन क्रियमाणं नृत्यं देवाः आकाशे स्थित्वा आश्चर्येण पश्यन्ति स्म।

कृष्णेन लीलया क्रियमाणेन मर्दनेन कालियस्य फणाः शिथिलाः अभवन्। शक्तिः कुण्ठिता जाता। नासिकाभ्यः मुखेभ्यः च रक्तम् आगतम्। दंष्ट्राः शिथिलाः सन्तः पतिताः। विषज्वालाः शान्ताः अभवन्। एवं कालियः सर्वथा शक्तिहीनः श्रान्तः च। मरणावस्थाम् आपन्नः सः कृष्णं दैन्येन प्रार्थितवान्— "भगवन्! भवतः वास्तविकं स्वरूपम् अजानन् अहम् अहङ्कारेण व्यवहृतवान्। पवित्रं भवदीयं शरीरं स्वेच्छया दष्टवान्। मम मदस्य योग्यं दण्डनं जातम्। मां क्षाम्यतु। मयि कृपां प्रदर्शयतु। मम विषम् अपगतम्। मयि विवेकः उदितः। अहं भवतः दासः अस्मि। भवान् यथा वदति तथा आचरामि। मम मदस्य निवारणार्थं भवान् यत् पादाघातं कृतवान् तेन मम शरीरं पूतं जातम्। नर्तनं स्थगयन् माम् अनुगृह्णातु। मयि कृपां प्रदर्शयतु" इति। तस्य पत्नीपुत्रादयः अपि दीनभावेन कृष्णं पश्यन्तः आसन्।

कालियविषये दयां प्राप्य कृष्णः उक्तवान्— "भोः कालिय, भवतः प्रार्थनाम् अङ्गीकृत्य नृत्यं स्थगयामि। इतः परं भवता अत्र यमुनानद्यां न स्थातव्यम्। भवता सपरिवारं समुद्रं प्रति गन्तव्यम्। भवतः

शिरसि मम पादचिह्नानि यानि दृश्यन्ते ततः गरुडः भवतः उपरि कदापि आक्रमणं न करिष्यति। भवद्विषये सन्तुष्टस्य मम अनुग्रहः एषः इति भावयतु" इति।

अनन्तरक्षणे एव कालियः परिवारेण सह समुद्रं प्रति प्रस्थितवान्। कृष्णः ह्रदतः उपरि आगच्छन् किमपि न प्रवृत्तम् एव इति भावं प्रदर्शयन् मन्दहासं प्रकटयन् सर्वान् दृष्टवान्। हस्तम् उपरि उन्नीय इतस्ततः चालयन् बन्धुवर्गं प्रविष्टवान्।

मातापितरौ त्वरया आगत्य तं प्रीत्या आलिङ्ग्य आशीर्वादम् उक्तवन्तौ। कृष्णः सर्वान् विनयेन नमस्कृतवान्। सर्वे गोपाः कृष्णं परितः तिष्ठन्तः विविधैः प्रशंसावचनैः स्वकीयं सन्तोषं प्रकटितवन्तः।

कालियमर्दनं कृतवन्तं कृष्णं परमात्मस्वरूपिणं मन्यमानाः केचन– "हे कृष्ण! एतादृशं धैर्यम्, अपरिमितं बलम् इत्यादयः सामान्येषु भवितुं सर्वथा न शक्यते। भवतः महिमा वर्णनातीतः। भवान् एव अस्माकं, गोसमूहस्य च रक्षकः। इतः परं यमुनानद्यां स्नाने कोऽपि क्लेशः न भविष्यति। ऋषयः अत्र निश्शङ्कं स्नानं कर्तुम् अर्हन्ति। भवान् साक्षात् देवः एव। अद्यावधि वयं भवतः नैजं स्वरूपं ज्ञातुं न शक्तवन्तः" इति वदन्तः कृष्णेन पदे पदे वार्यमाणाः अपि साष्टाङ्गं नमस्कारं कृतवन्तः।



गोपयुवकाः भिन्नभिन्नप्रश्नान् पृच्छन्ति। सर्वेभ्यः योग्यम् उत्तरं वदन् कृष्णः सर्वैः गोपैः सह बृन्दावनं प्रति आगतवान्। दिनानि सुखेन याप्यमाणानि आसन्।

कालान्तरे वृन्दावनपरिसरे तृणाभावः दृष्टः। अग्रे किं करणीयम् इति समालोचनम् अपि प्रवृत्तम्। तदा केचन गोपवृद्धाः एवम् उक्तवन्तः– "गोवर्धनगिरेः पार्श्वे कालिन्दीह्रदस्य समीपे यमुनातीरे विशालं तालवनम् अस्ति। अत्र तृणसम्पत्तिः अपरिमिता दृश्यते। किन्तु तत्र धेनुकनामकः राक्षसः गर्दभरूपेण तिष्ठति। अन्यः कोऽपि मानवः पशुः वा तत् वनं यथा न प्रविशेत् तथा रक्षणं करोति च" इति।

एतां वार्तां श्रुतवतोः बलरामकृष्णयोः



उत्साहः द्विगुणितः जातः। तौ धैर्यशालिनः गोपयुवकान् उक्तवन्तौ– "किं राक्षसेभ्यः वयं भीताः भवेम? यत्र तृणसम्पत्तिः तत्र सधैर्यं गच्छाम वयम्" इति।

बलरामः कृष्णः इतरे गोपाः च गोवृन्देन सह तत् तालवनं गतवन्तः। तत्र कोमलानि तृणानि हरिद्वर्णेन शोभमानानि आसन्। एतेन आकृष्टाः गावः अत्यानन्देन अग्रे गत्वा चरणम् आरब्धवन्तः। बलरामः कृष्णः इतरे गोपाः च तत्र सन्तोषेण किञ्चित्कालं विहारं कृतवन्तः।

तदा कृष्णः बलरामम् उक्तवान्– "अग्रज! अस्माकं गावः तु सन्तोषेण निश्चिन्ततया चरन्तः सन्ति। एतानि मधुराणि तालफलानि खादाम वयम्। भवान् वृक्षम् आरुह्य फलानि पातयतु" इति।

"वृक्षारोहणेन कालव्ययः श्रमव्ययः च भवति। अतः अहं वृक्षान् बलेन कम्पयामि। पतितानि फलानि भवन्तः सङ्गृह्य राशीकुर्वन्तु" इति उक्त्वा बलरामः लीलया एकैकशः तालवृक्षान् कम्पयितुम् आरब्धवान्। तालफलानि सशब्दम् पतितानि। तस्मिन् एव समये तालपत्राणि अपि महान्तं शब्दम् उत्पादयन्ति स्म।

एते विभिन्नाः शब्दाः धेनुकासुरेण अपि श्रुताः। गर्दभस्य रूपेण स्थितः सः तेनैव रूपेण स्थितैः सहस्राधिकसङ्ख्याकैः अनुचरैः सह बलरामकृष्णयोः समीपम् आगतवान्। तेषां समूहं दृष्ट्वा गोपाः नितरां भीताः।

ते गर्दभाः खुरैः धूलिम् उत्पादयन्तः आगच्छन्तः आसन्। तेषां ध्वांक्षणं तु कर्णकठोरम् आसीत्। धेनुकासुरः तेषां सर्वेषां अग्रे स्थितः आसीत्।

बलरामः धेनुकासुरस्य पुरतः गत्वा स्थितवान्। धेनुकः मुखं परिवृत्य पादद्वयम् उन्नीय बलरामस्य उरसि बलात् ताडितवान्। तदा बलरामः झटिति तस्य पादद्वयं गृहीत्वा तम् उन्नीतवान्। वेगेन परितः भ्रामयन् उत्क्षिप्तवान्। धेनुकस्य शरीरं तालवृक्षेण घट्टितम् अभवत्। धेनुकः तत्रैव प्राणान् त्यक्तवान्।

अनन्तरं बलरामः अन्यान् गर्दभरूपिणः राक्षसान् अपि एवम् एव उत्क्षिप्तवान्।

कृष्णः अपि एवम् एव राक्षसान् एकैकशः उत्क्षिप्तवान्। वृक्षैः घट्टिताः राक्षसाः तत्रैव प्राणान् त्यक्तवन्तः। समग्रे वने मृतानां राक्षसानां शरीराणि तालफलानि च राशिरूपेण दृश्यन्ते। गोपकुमाराः बलरामकृष्णयोः पराक्रमं प्रशंसन्तः नृत्यं कृतवन्तः। धेनुकासुरस्य मरणतः तालवनं निष्कण्टकं जातम्।

अन्यदा कदाचित् गोपकुमाराः भाण्डीरवटप्रदेशे गावः चारणार्थं नीत्वा क्रीडायां मग्नाः आसन्। तदा प्रलम्बः नाम राक्षसः गोपवेषेण तेषां गणं प्रविष्टवान्। गोपाः निश्चितवन्तः यत् हरिणक्रीडानामिका क्रीडा क्रीडनीया इति। क्रीडायाः स्वरूपं तु– 'सर्वे युगलरूपेण विभक्ताः भवन्ति। युगलं पक्षद्वये पुनः विभज्यते। भाण्डीरवटं सीमात्वेन परिकल्प्य पक्षद्वयस्य युगलानि अपि धावन्ति। यः पक्षः पराजयं प्राप्नोति तस्य पक्षस्य जनाः जयं प्राप्तवतः पक्षस्य जनान् स्वस्कन्धे आरोप्य भाण्डीरवटपर्यन्तं धावेयुः' इति। कृष्णः एकस्य पक्षस्य नायकः श्रीधामा अन्यस्य पक्षस्य नायकः। प्रलम्बः बलरामेण मिलितः आसीत्। क्रीडायां कृष्णस्य पक्षस्य एव जयः अभवत्।

श्रीधामपक्षीयेण प्रलम्बेन कृष्णपक्षीयं बलरामं स्वस्कन्धे आरोप्य धावनीयम् आसीत्। अतः प्रलम्बः बलरामं स्वकन्धे आरोपितवान्। वटवृक्षं प्रति गमनं परित्यज्य अन्यत्र कुत्रापि गत्वा बलरामम् अधः पातयित्वा घोरं राक्षसरूपं धृत्वा स्थितवान्।

आश्चर्यचकितः बलरामः उच्चैःस्वरेण कृष्णं वस्तुस्थितिं निवेदितवान्।

कृष्णः ततः एव सूचितवान्– ''तं यमपुरीं प्रेषयतु'' इति।

बलरामः मुष्टिं बद्ध्वा मुष्ट्या राक्षसस्य शिरसि एकं बलयुतं प्रहारं दत्तवान्। तेन राक्षसस्य शिरः द्विधा विभक्तम्। सः रक्तं वमन् अधः पतितवान्, प्राणान् त्यक्तवान् च। एवं स्वबलेन प्रलम्बासुरं मारितवता बलरामेण 'बलदेवः' इत्यपि नाम प्राप्तम्।





# लक्ष्मीकटाक्षः

श्रीपुरग्रामे नागेशः नाम कश्चित् आसीत्। सः कष्टेन जीवनं यापयति। यदा तस्य हस्ते धनम् आसीत् तदा सः तत् धनं मित्राय ऋणरूपेण दत्तवान् आसीत्। स्नेहितः यद्यपि ऋणं प्रत्यर्पितवान् किन्तु तत्समये नागेशस्य पत्नी अस्वस्था जाता इत्यतः तस्याः औषधोपचारार्थम् एव तत् व्ययितम्। तेषु एव दिनेषु केचन बन्धवः आगत्य किमपि किमपि व्याजं वदन्तः द्वित्रान् मासान् यावत् स्थितवन्तः। अत्रान्तरे एकस्यां रात्रौ चोराः आगत्य अमूल्यानि वस्तूनि पात्राणि च चोरितवन्तः। दुरदृष्टं नाम एतस्मिन् एव समये नागेशः उद्योगात् च्युतः अपि अभवत्।

एवं कष्टपरिस्थितिवशात् नागेशः बहुत्र ऋणं स्वीकृतवान्। इदानीं कुतश्चित् अपि ऋणं न लभ्यते।

एतादृशजीवनेन नागेशः अतीव निर्विण्णः हताशः च। अतः सः आत्महत्यां कर्तुम् इच्छन् नदीं प्रति प्रस्थितवान्।

मार्गे सः एकं संन्यासिनं दृष्टवान्। सः संन्यासी एतं दृष्ट्वा उक्तवान्– "भोः मम एकं साहाय्यं करोति वा? अहं सुदूरतः आगतवान् अस्मि। पादे महतीं वेदनाम् अनुभवामि। भवान् मम पादमर्दनं कर्तुं शक्नोति वा? प्रतिफलरूपेण भवान् यत् पृच्छति तत् ददामि" इति।

संन्यासिनां विषये नागेशस्य महत् गौरवम् आसीत् एव। अतः सः संन्यासिनम् उक्तवान्– "अस्तु श्रीमन्! भवतः सेवाम् अवश्यं करोमि। प्रतिफलं किमपि मास्तु मम। भवान् वृक्षस्य अधः उपविशतु तावत्" इति।

संन्यासी मार्गस्य पार्श्वे स्थितस्य वृक्षस्य अधः उपविष्टवान्। नागेशः

"भामहः"



किञ्चित्कालपर्यन्तं श्रद्धया तस्य पादमर्दनं कृतवान्। एतेन सन्तुष्टः संन्यासी उक्तवान्– "भोः, सेवया अलम्। भवान् यत् इच्छति तत् पृच्छतु, ददामि" इति।

"स्वामिन्! सद्यः एव मरणं प्राप्तुम् इच्छतः मम काऽपि आशा नास्ति" इति उक्तवान् नागेशः।

संन्यासी तस्य कष्टादिकं विस्तरेण श्रुत्वा उक्तवान्– "एतस्य लघुकारणस्य निमित्तं किं भवान् प्राणान् त्यक्तुम् इच्छति? छे, एवं न करणीयम्। अहं भवतः दारिद्र्यं निवारयिष्यामि। एतत् भस्म स्वीकरोतु" इति वदन् स्वप्रसेवतः किञ्चित् भस्म निष्कास्य दत्तवान्। पुनः उक्तवान् च– "एतेन भस्मना भवान् दश दिनानि यावत् लक्ष्म्याः पूजां श्रद्धया करोतु। भवतः दारिद्र्यतापः दूरं गमिष्यति" इति।

संन्यासिनः वचनेन नागेशः सन्तुष्टः। अत्रान्तरे तस्य मनसि अन्यः सन्देहः अपि उत्पन्नः– 'संन्यासिना एतेन अल्पम् एव भस्म दत्तम्। प्रथमदिनस्य पूजार्थं केवलम् एतत् पर्याप्तं भवेत्। इतरेषु नवसु दिनेषु भस्मना विना पूजा कथम्?' इति। सः एतं सन्देहं संन्यासिने निवेदितवान्।

तदा संन्यासी मन्दहासं प्रकटयन्– "मया दत्तं भस्म न सामान्यम्। तत् परमपवित्रम् अपूर्वं महिमशालि च। पूजार्थम् एतस्य उपयोगं यावद् वा करोतु एतत् अक्षयरूपेण तिष्ठति। अतः ये दारिद्र्ये सन्ति तेभ्यः अपि एतत् दत्त्वा साहाय्यं कर्तुम् अर्हति भवान्। किन्तु एकः मुख्यः विषयः स्मरणीयः यत् यदा धनस्य अनिवार्यता न भवति तादृशसन्दर्भेषु अत्याशया एतस्य भस्मनः उपयोगः पूजार्थं कृतः चेत् विद्यमाना सम्पत्तिः अपि नश्यति। न्यायमार्गेण पूजा कृता चेत् एव एतत् इष्टार्थं ददाति, न अन्यथा" इति जागरूकतावचनानि उक्तवान्।

नागेशः सन्तुष्टः सन् संन्यासिनं भक्त्या नमस्कृत्य भस्म स्वीकृत्य गृहं प्रत्यागतवान्। पत्नीं प्रवृत्तं सर्वं निवेदितवान् च। सन्तुष्टा सा तत् भस्म ताम्रपात्रे सुरक्षितरूपेण स्थापितवती।

नागेशस्य गृहे पूजार्थं लक्ष्मीचित्रं न

आसीत्। तस्य गृहस्य पुरतः कश्चित् धनिकः निवसति स्म। लक्ष्मीचित्रं प्रष्टुं नागेशः तस्य धनिकस्य गृहं गतवान्।

सः धनिकः अपेक्षायाः कारणादिकं ज्ञात्वा स्वगृहे स्थितं लक्ष्मीचित्रम् आनीय यच्छन् उक्तवान्– "एकवर्षात् पूर्वम् एतस्य चित्रस्य दर्पणावरणं भग्नम्। इदानीम् भस्मना पूजार्थम् एतस्य उपयोगः कृतः चेत् एतत् चित्रं नश्येत्। तथा एतस्य हानिः कापि जाता चेत् नूतनं चित्रम् आनीय दातव्यम्" इति।

नागेशः एतत् अङ्गीकृत्य लक्ष्मीचित्रं स्वीकृत्य गृहम् आगतवान्। प्रवृत्तं सर्वं ज्ञात्वा तस्य पत्नी उक्तवती– "सुन्दरम् एतत् चित्रं भस्मलेपनेन मलिनीकर्तुम् अहं न इच्छामि। एतादृशम् अन्यत् अपि न लभ्येत। अतः दर्पणावरणस्य योजनानन्तरम् एव एतस्य पूजनं वरम्" इति।

पत्न्याः इच्छानुसारं नागेशः लक्ष्मीचित्रं स्वीकृत्य आपणं गतवान्। आपणिकः उक्तवान्– "दर्पणावरणस्य योजनार्थं भवता एकं रूप्यकं दातव्यं भवति। तत् कर्तुं न शक्नोति चेत् दश दिनानि यावत् मम गृहे कार्यं करणीयम्। एषः नियमः अङ्गीकृतः चेत् अहं दर्पणावरणं योजयित्वा दास्यामि" इति।

धनाभावकारणतः नागेशः द्वितीयं विकल्पम् एव अङ्गीकृतवान्। यदा पञ्च दिनानि यावत् नागेशेन कार्यं कृतं तदा आपणिकः उक्तवान्– "इदानीं मम गृहे कार्यं नास्ति। दिनद्वयानन्तरम् आगच्छतु" इति।





एतदनुगुणं गृहं प्रतिगतः नागेशः दिनद्वयानन्तरम् आपणिकस्य गृहं गतवान्।

तं दृष्ट्वा हसन् आपणिकः उक्तवान्– "स्मरतु, निरन्तरं दश दिनानि कार्यं करोमि इति भवता अङ्गीकृतम् आसीत्। पञ्च दिनानि भवान् यद्यपि कार्यं कृतवान् तथापि मध्ये दिनद्वयस्य विरामः अभवत्। अतः भवता अद्य आरभ्य दश दिनानि निरन्तरं कार्यं करणीयम्। तदनन्तरम् एव अहं दर्पणावरणं योजयित्वा दास्यामि" इति।

'एतस्य गृहे कार्यं कर्तुं न शक्यते एव। किमपि किमपि व्याजं वदन् एषः मां पुनरपि कार्ये योजयिष्यति' इति आलोचितवान् नागेशः।

अतः सः ततः निर्गत्य कञ्चित् स्नेहितं धनं पृष्टवान्। सः उक्तवान्– "भोः, मम गृहस्य पृष्ठतः उद्याने कश्चन वल्मीकः अस्ति। तत्र सर्पाः निवसन्ति। तं वल्मीकं नाशयित्वा भवान् सर्पान् मारयति चेत् अहम् एकं रूप्यकं दास्यामि। ऋणरूपेण तु दातुं न शक्नोमि" इति।

"सर्पाणां मारणं मया एकाकिना कथं शक्येत? एतदर्थम् अहितुण्डिकस्य साहाय्यम् अपेक्षितम्" इति उक्तवान् नागेशः।

"तर्हि अहितुण्डिकाय एव एकं रूप्यकं दास्यामि। किमर्थं भवते दातव्यम्?" इति पृष्टवान् सः स्नेहितः।

"तत् तु अन्याय्यम्" इति उद्गारं प्रकटितवान् नागेशः।

"भवान् एकं रूप्यकं किमर्थं पृच्छति इति अहं जानामि। भवतः गृहस्य पुरतः स्थितः धनिकः एव लक्ष्मीचित्रस्य दर्पणावरणं कारयितुम् एकं रूप्यकं व्ययीकर्तुं न शक्नोति। एवं स्थिते मया कथं शक्येत? दत्तं ऋणं प्रत्यागच्छेत् इत्यत्र कः विश्वासः? अतः कार्यं कृतं चेत् प्रतिफलरूपेण रूप्यकं दद्यां, न तु ऋणरूपेण" इति उक्तवान् सः स्नेहितः।

अनन्यगतिकः नागेशः अन्तिम-प्रयत्नरूपेण कुसीदवणिजः समीपं गतवान्। एकस्य रूप्यकस्य ऋणं पृष्टवान् च।

तदा सः कुसीदवणिक् उक्तवान्– "भवतः प्रामाणिकताम् अहं जानामि। अतः

आधिरूपेण किमपि वस्तु अस्वीकृत्य भवते ऋणं दातुम् अहं सिद्धः। एकमासाभ्यन्तरे एतत् भवता प्रत्यर्पणीयम्। वृद्धिरूपेण पुनः एकं रूप्यकं दातव्यं च। एवं दातुं न शक्तं चेत् भवता, भवतः पत्न्या च आजीवनं मम गृहे दास्यवृत्त्या स्थातव्यम्। एतत् अनुमतं चेत् ऋणं दास्यामि" इति।

एतस्य कुसीदवणिजः नियमाः अतीव घोराः इति अभासत नागेशस्य मनसि। अतः सः गृहं गत्वा पत्न्यै समग्रं निवेदितवान्।

तदा पत्नी उक्तवती– "इतः परम् अन्यः मार्गः नास्ति एव खलु? दैवानुग्रहः यदि स्यात् तर्हि वयम् उज्जीविताः भवेम। संन्यासिनः वचनं यदि सत्यं स्यात् तर्हि दशसु दिनेषु अस्माकं दारिद्र्यम् अपगतं भवेत्। अतः कुसीदवणिजः नियमम् अङ्गीकृत्य ऋणम् आनीय लक्ष्मीचित्रं दर्पणेन योजयतु" इति।

नागेशः कुसीदवणिजः समीपं गत्वा अङ्गीकारं प्रदर्श्य ऋणम् आनीतवान्। लक्ष्मीचित्रम् आपणिकस्य हस्ते दत्तवान् च। आपणिकः रूप्यकं स्वीकृत्य दर्पणावरणं योजयित्वा दत्तवान्। नागेशः तत् चित्रम् आनीय दश दिनानि यावत् श्रद्धया लक्ष्मीपूजां कृतवान्।

दशमे दिने नागेशः मध्याह्ने पूजां समाप्य सायं गृहस्य पृष्ठतः बीजारोपणार्थं भूमिं खनन् आसीत्। तदा कोऽपि विचित्रः शब्दः आगतः। नागेशः ततोऽपि अधः यदा खननं कृतवान् तदा सुवर्णनाणकैः पूर्णं महाकलशद्वयं प्राप्तम्।



नागेशस्य दारिद्र्यम् अपगतम्। सः कुसीदवणिजः ऋणं प्रत्यर्पितवान्। अन्यत् ऋणं यद्यत् दातव्यम् आसीत् तत्सर्वं दत्तवान्। लक्ष्मीचित्रं धनिकस्य कृतज्ञतापूर्वकं प्रत्यर्पितवान्। किन्तु तथा प्रत्यर्पणसमये सः चित्रस्य दर्पणावरणं निष्कासितवान् आसीत्।

एतत् दृष्ट्वा सः धनिकः असमाधानेन पृष्टवान्– "भोः, दर्पणावरणसहितं प्रत्यर्पितं चेत् भवतः का हानिः अभविष्यत्? योजितम् अपि प्रत्यर्पणसमये निष्कासितवान् खलु? कीदृशी अल्पता भवतः?" इति।

तदा नागेशः विनयेन उक्तवान्– "श्रीमन्, स्वधनं व्ययीकृत्य पूजा कृता चेत् एव साफल्यम्। अतः पूजार्थं भवता स्वधनम् एव व्ययीकरणीयम्। आवश्यकं चेत् अहं मत्समीपे स्थितं महिमान्वितं भस्म भवते दास्यामि" इति।

तदा धनिकः कोपेन उक्तवान्– "अनिवार्यता यस्य नास्ति सः तेन भस्मना पूजां करोति चेत् सर्वनाशः भवति इति भवान् जानाति। मम सर्वनाशम् इच्छन् भवान् एवं भस्म दातुं सिद्धः जातः खलु? लक्ष्मीचित्रं यत् दत्तं तस्य प्रत्युपकाररीतिः वा एषा?" इति।

"श्रीमन्! अन्यथा न चिन्तयतु। वर्षात् पूर्वम् एव चित्रस्य दर्पणः भग्नः आसीत्। तथापि भवान् दर्पणं न योजितवान्। यदा मया पूजार्थं पृष्टं तदा अपि दर्पणयोजनं न कारितम्। अतः अहं चिन्तितवान् यत् भवान् अपि महत् दारिद्र्यकष्टम् अनुभवन् अस्ति इति। भवतः हितम् इच्छन् एव अहं भस्म दातुं सिद्धः जातः" इति उक्तवान् नागेशः।

एतत् वचनं श्रुत्वा धनिकः अतीव लज्जितः अभवत्। 'ये धनं पृच्छन्ति तेषाम् अनिवार्यता प्रथमं द्रष्टव्या' इति एतं सत्यम् एतेन प्रसङ्गेन ज्ञातवान् धनिकः। तद्दिनतः सः स्वकीयं दानं परिणामकारि यथा भवेत् तथा व्यवहर्तुम् आरब्धवान्। नागेशः अपि दरिद्राणां साहाय्यं कुर्वन् उत्तमां ख्यातिं सम्पादितवान्।





# उपकारः

काश्मीरदेशे पूर्वं कदाचित् सत्कुलोत्पन्नः कश्चन पण्डितः आसीत्। वस्तुतः तदीयः भूस्वामिवंशः। किन्तु एषः पण्डितः यदा व्यवहारसूत्रं स्वहस्ते स्वीकृतवान् तदा गृहे ऐश्वर्यं किमपि न आसीत् एव। तथापि सः कुलगौरवं रक्षितुम् इच्छन् अल्पेन व्ययेन व्यवहारं निर्वहन् दिनानि यापयन् आसीत्।

एतस्य पण्डितस्य एका सुन्दरी पुत्री आसीत्। तां परिणेतुं सिद्धाः बहवः पण्डितस्य गृहम् आगच्छन्ति। किन्तु पण्डितः कुलगौरवानुगुणं पुत्र्याः विवाहं निर्वर्तयितुं न समर्थः। अतः सः आगतान् सर्वान् केनापि व्याजेन प्रतिप्रेषयति।

तस्य वसतिभूते पुरातनगृहे कुत्रापि गुप्तनिधिः स्यात् इति जनानां भावना आसीत्। सुनन्दः नाम अन्यः धनिकः अपि एतद्विषये विश्वसिति। अतः सः पण्डितं धनिकं मन्यमानः कदाचित् बहुमूल्यकम् ऋणं पृष्टवान्। तदा पण्डितः सूक्ष्मतया स्वकीयां दुरवस्थां निवेदितवान्। "ऋणं दातुम् अनिच्छन् भवान् किमपि किमपि प्रकल्प्य वदति" इति वदन् सुनन्दः कलहम् आरब्धवान्। एवम् आरब्धं तयोः वैमनस्यं द्वेषरूपताम् अवाप्नोत्।

प्रतीकारं साधयितुम् इच्छन् सुनन्दः कस्यचित् महाचोरस्य स्नेहं सम्पादितवान्। पण्डितस्य गृहे स्थितम् ऐश्वर्यम् अपहरणीयम् इति तं सूचितवान् च।

तद्दिने मध्यरात्रसमये चोरः पण्डितस्य गृहं प्रविष्टवान्। तत्समये निद्राम् अप्राप्तवान् पण्डितः पुनःपुनः पार्श्वपरिवर्तनं कुर्वन् सुप्तः आसीत्। पत्युः एताम् अवस्थां दृष्ट्वा तदीया पत्नी पृष्टवती– "किं, निद्रा न आगता? पुत्र्याः विषये एव खलु भवतः सदा चिन्ता? बहवः आगत्य तां परिणेतुम् इच्छां प्रकटितवन्तः। किन्तु भवान् एव सर्वं

निराकृतवान्। एवं किमर्थम् ?" इति।

इदानीं तु परिस्थितिः निवेदनीया एव आपतिता पण्डितेन। अतः सः पत्नीम् उक्तवान्-"अद्यावधि मया भवत्यै अपि वस्तुस्थितिः न निवेदिता आसीत्। अहम् एव कथञ्चित् निर्वहन् आसम्। यावत् धनं मम हस्ते आसीत् तावत् तु वंशगौरवानुगुणं व्यवहारार्थं व्ययितम्। इदानीं तु कुटुम्बनिर्वहणम् एव कष्टाय जातम्। एवं स्थिते पुत्र्याः विवाहार्थं कुतः धनम् आनेष्यामि? किं करोमि, कुत्र गच्छामि इत्येव मम चिन्ता" इति।

तदा तस्य पत्नी– "हा हन्त! कीदृशी दुर्गतिः आगता! यस्मिन् ग्रामे एतवत्पर्यन्तं धनिकाः इव व्यवहारं कृतवन्तः तत्रैव इतःपरं कथं वा धनहीनं जीवनं यापयेम?" इति वदन्ती रोदनम् आरब्धवती। पण्डितः अपि दुःखितः अभवत्।

एतं वार्तालापं चोरः अपि श्रुतवान्। अत्र तु गृहस्य दारिद्र्यस्य स्पष्टं चित्रणं तेन प्राप्तम्। असत्यम् उक्तवतः सुनन्दस्य विषये कुपितः सः ततः मौनेन निर्गतवान्।

अनन्तरदिने सुनन्दः बहुकालपर्यन्तं चोरस्य निरीक्षणं कुर्वन् आसीत्। अन्धकारप्रसारानन्तरम् आगच्छेत् इति भावयन् रात्रौ अपि सः गृहस्य पुरतः एव उपविष्टवान्। 'इतः परं प्रतीक्षया प्रयोजनं नास्ति' इति विचिन्त्य मध्यरात्रे यदा तेन गृहं प्रविष्टं तदा दृष्टं यत् अमूल्यानि वस्तूनि चोरितानि सन्ति! सः उच्चैः विलपनं कृतवान्।

पण्डितस्य पत्नी प्रातः यदा उत्थितवती तदा शिरसः पार्श्वे स्थापितम् एकं ग्रन्थिं दृष्टवती। सा पतिम् उत्थाप्य ग्रन्थिं प्रदर्शितवती। आश्चर्येण तौ ग्रन्थिम् उद्घाटितवन्तौ। तत्र आभरणानि रजतसुवर्णनाणकानि च आसन्। एकस्मिन् लघुपत्रे लिखितम् आसीत्– "भवतोः पुत्र्याः विवाहार्थं चोराग्रेसरेण समर्प्यमाणम् आशीर्वादसहितम् उपायनम् एतत्" इति।





# पुनर्विवाहः

कस्मिंश्चित् ग्रामे कश्चन धनिकः कृषिकः आसीत्। तदीयं गृहं विशालम्। रजतपात्राणि सुवर्णाभरणादीनि च तद्गृहे यथेष्टम् आसन्। किन्तु दौर्भाग्यं यत् तस्य कृषिकस्य पत्नी न जीवति!

एकदा तद्ग्रामीणा काचित् कृषिकबालिका धनिकस्य गृहं कार्यार्थम् आगतवती। तस्याः कार्यकौशलं, शुभ्रता, हसन्मुखता इत्यादयः गुणाः धनिकाय अरोचन्त।

तां परिणेतुम् इष्टवान् धनिकः। अतः सः उत्साहेन तस्याः समीपं गत्वा परमसन्तोषकरीं वार्तां श्रावयन् इव विवाहप्रस्तावं कृतवान्।

"अहो, एवं वा?" इति उपहासपूर्वकम् उक्त्वा सा कन्यका मुखं परिवृत्य— "अहो! वृद्धस्य एतस्य वार्धके विवाहचापलम्" इति उद्गारं प्रकटितवती।

लज्जाकारणतः एषा सुस्पष्टं वक्तुं न शक्नोति इति भावयन् धनिकः कृषिकः उक्तवान्— "सत्यं भोः, भवतीं परिणेतुम् इच्छामि इति एतत् सत्यम् एव" इति।

"भवान् मां परिणेतुम् इच्छति? किम् एतत्?" इति वदन्ती सा कन्यका मुखं परिवृत्य स्वकीयं निराकरणं प्रदर्शितवती।

धनिकः विविधैः प्रकारैः तां पुनः पुनः बोधितवान्। किन्तु सा कथमपि एतं विवाहं न अङ्गीकृतवती।

एतया सह चर्चया किमपि प्रयोजनं नास्ति इति भावयन् धनिकः तस्याः पितरं स्वगृहम् आनायितवान्। तम् उक्तवान् च— "भोः, मां परिणेतुं भवतः पुत्रीम् अङ्गीकारयेत् तर्हि भवता ऋणं प्रत्यर्पणीयं न भविष्यति। भवतः कृषिक्षेत्रस्य पार्श्वे यत् क्षेत्रम् अस्ति तदपि भवते दास्यामि। अतः एतद्विषये चिन्तयतु"

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"



इति।

"सा तु अल्पवयस्का। अविचार्य किमपि उक्तवती स्यात्। ताम् अहम् अङ्गीकारयिष्यामि" इति आश्वासनं दत्त्वा सः कृषिकः स्वगृहं गतवान्।

गृहं गत्वा सः सामदानादिभिः उपायैः बहुधा प्रयत्नं कृतवान्। विविधाः आशाः प्रदर्शितवान् अपि। तथापि सा न अङ्गीकृतवती।

कानिचन दिनानि अतीतानि। तस्मात् निर्धनकृषिकतः उत्तरं किमपि न आगतम्। अतः सः धनिकः तं कृषिकं स्वसमीपं पुनः आनाय्य असमाधानेन सूचितवान्— "पुत्रीम् अङ्गीकारयिष्यामि इति वचनं दत्तवान् भवान्। तदर्थम् इतोऽपि कियान् कालः अपेक्षितः? भवता शक्यते वा न वा इति स्पष्टं वदतु तावत्" इति।

निर्धनः कृषिकः वाचा स्खलन् उक्तवान्— "उत्तरदाने विलम्बः जातः, सत्यम्। तथापि चिन्ता नास्ति। भवान् मुहूर्तं निश्चित्य मां सूचयतु। मुहूर्तदिने कार्यव्याजेन मम पुत्रीं भवतः गृहं प्रेषयिष्यामि। तथा कर्तुं न शक्तं चेत् बलात् आकृष्य वा आनेष्यामि। निश्चिते मुहूर्ते भवान् तां परिणेतुम् अर्हति" इति।

एषः उपायः युक्तः इति आलोचितवान् धनिकः। अतः सः मुहूर्तं निश्चित्य विवाहसन्नाहम् आरब्धवान्। बान्धवान् सर्वान् आहूतवान्। पुरोहितः अपि सूचितः।

मुहूर्तः आसन्नः चेदपि कन्यका यदा तत्र न प्राप्ता तदा चिन्ताक्रान्तः धनिकः एकं कर्मकरम् आहूय उक्तवान्— "अस्माकं सम्बन्धिनः कृषिकस्य गृहं गत्वा तां दृप्ताम् आनयतु। स्वयम् आकृष्य आनयामि इति तेन कृषिकेण उक्तम् आसीत्। न जाने, किमर्थं तेन न शक्तम् इति" इति।

दृप्ता, आकर्षणम् इत्यादीनां श्रवणेन सः कर्मकरः चिन्तितवान् यत् मया काचित् अश्वा आकृष्य आनेतव्या अस्ति इति। अतः सः निर्धनस्य तस्य कृषिकस्य गृहं गत्वा उक्तवान्— "अस्माकं स्वामिनः आज्ञा अस्ति यत् सा दृप्ता आकृष्य आनेतव्या इति। सा कुत्र? शीघ्रं प्रदर्शयतु" इति।

"मम पुत्री तत्र कृषिक्षेत्रे किमपि कुर्वती अस्ति। अतः तां गत्वा निवेदयतु नयतु च" इति सूचितवान् कृषिकः।

कर्मकरः धावन् कृषिक्षेत्रं गत्वा तृणसङ्ग्रहणरतां कृषिकपुत्रीम् उक्तवान्– "भोः, भवत्याः पित्रा दृप्ता अश्वा आकर्षणपूर्वकम् आनीयते इति अस्माकं स्वामी सूचितः आसीत्। तां नेतुम् एव अहम् आगतः अस्मि। सा अश्वा कुत्र? शीघ्रं प्रदर्शयतु" इति।

"एवं वा?" इति उद्गारं प्रकटयन्ती मनसि एव हसन्ती च कृषिकपुत्री उक्तवती– "अस्माकं कृष्णवर्णीया सा अश्वा पार्श्वस्थे क्षेत्रे अस्ति। ततः तां नयतु" इति।

कर्मकरः तया सूचितायां दिशि गत्वा तत्रस्थाम् अश्वां प्राप्य तस्याः उपरि एव उपविश्य वेगेन धनिकगृहं प्राप्य द्वारसमीपे तां बद्ध्वा अन्तः गतवान्।

तं कर्मकरं दृष्ट्वा उद्वेगेन धनिकः पृष्टवान्– "आनीतवान् वा?" इति।

"आं प्रभो! महता कष्टेन सा आनीता। द्वारपार्श्वे स्थिता अस्ति च" इति उक्तवान् कर्मकरः।

"अस्तु तावत् ताम् अट्टस्य उपरि स्थितं प्रकोष्ठं नयतु" इति सूचितवान् धनिकः।

"मया सा नेतव्या? मया एकाकिना शक्येत वा?" इति सम्भ्रान्तः कर्मकरः पृष्टवान्।

'सा वधूः इतोऽपि निराकरणं प्रदर्शयन्ती कोलाहलं कुर्वती अस्ति' इति आलोच्य धनिकः उक्तवान्– "यदि एकाकी न



शक्नोति तर्हि साहाय्यकान् स्वीकरोतु। कार्यं तु अविलम्बेन भवेत्'' इति।

सः कर्मकरः इतरान् द्वित्रान् आहूतवान्। द्वित्राः ताम् अश्वाम् आकृष्टवन्तः। अन्ये केचन पृष्ठतः नोदितवन्तः। कथञ्चित् ते ताम् अट्टस्य उपरि प्रकोष्ठे स्थापितवन्तः।

''महता प्रयासेन सा अट्टस्थं प्रकोष्ठं प्रति नीता श्रीमन्'' इति निवेदितवान् सः कर्मकरः।

''उचितेन पुरस्कारेण भवन्तं तोषयिष्यामि। सा त्वरया अलङ्करणीया इति स्त्रियः सूचयतु'' इति उक्तवान् धनिकः।

''तस्याः कः अलङ्कारः?'' इति आश्चर्येण पृष्टवान् सः कर्मकरः।

''विस्तरेण सूचनार्थं मम समयः नास्ति। स्त्रियः तत्सर्वं जानन्ति। ताः यद्यत् पृच्छन्ति तत्सर्वं ददातु भवान्। मङ्गलसूत्रम् अपि सिद्धं भवतु'' इति सूचितवान् धनिकः।

कर्मकरः ततः गत्वा दासीः उक्तवान्– ''स्वामी सूचयति यत् सा अश्वा वधूः इव अलङ्करणीया इति। स्मरन्तु, एषा यजमानस्य आज्ञा! आगताः सर्वे यथा सन्तुष्टाः भवेयुः तथा अलङ्कारः करणीयः'' इति।

कर्मकरेण आनीय दत्तानि आभरणानि धारितवत्यः दास्यः। अनन्तरं कर्मकरः धनिकसमीपम् आगत्य निवेदितवान्– ''सर्वं सिद्धम्'' इति।

''अस्तु। अलङ्कृतां ताम् अधः आनयन्तु'' इति त्वरवेगेण स्थितः धनिकः उत्साहेन उक्तवान्। सेवकाः जागरूकतया आभरणादिभिः अलङ्कृतां ताम् अश्वाम् अधः आनीतवन्तः। टकटकेति शब्दं श्रुतवतां सर्वेषां दृष्टिः अश्वायाः उपरि पतिता। सर्वत्र ''हो हो!'' इति हासतरङ्गाः व्याप्ताः अभवन्। सर्वे उदरोपपीडं हसितवन्तः।

धनिकस्य उपहासं कुर्वन्तः जनाः एकैकशः ततः निर्गतवन्तः। एवम् अवमानितः धनिकः तदनन्तरं कदापि पुनर्विवाहस्य विषये न चिन्तितवान्।



## अल्पः पक्षी, महत् उदरम्



रॉबिन् पक्षी प्रतिदिनं तावत् कीटान् खादति यत् पार्श्वे पार्श्वे स्थापितानां तेषां दैर्घ्यं १४ प्राङ्गुलमितं (४.२६ मी.) भवेत्। द्वादशघण्टात्मके अवधौ सः पक्षी स्वशरीरस्य भारः यावान् अस्ति ततोऽपि ४१% अधिकभारयुतम् आहारं सेवते!



## उन्नताः पर्वतश्रेणयः

प्रपञ्चे विंशतिः उन्नताः पर्वतश्रेणयः सन्ति। तासु त्रयोदश पर्वतश्रेणयः हिमालयपर्वते, अवशिष्टाः सप्त पर्वतश्रेणयः काराकोरं समीपे च सन्ति।

## काकाः उन्नतदेशवासिनः

रक्तवर्णयुतेन पादेन सहिताः काकाः समुद्रतलतः ८२०० मी (२६,९०२ फुट्) उन्नते प्रदेशे निवसन्ति। गौरीशङ्करशिखरं ये आरोहन्ति तान् अनुसरन्तः एते काकाः तदा तदा उड्डयमानाः दृश्यन्ते।

## स्पञ्ज्



स्पाञ्जुनाम्ना ख्यातं शैवालं वस्तुतः तु समुद्रवासिनां सूक्ष्मजीविविशेषाणां कश्चन समूहः। समुद्रतले, शिलानाम् उपरि च एते जीविनः समूहरूपेण निवसन्ति। एतेषां वसतेः परिमाणं तु १ मी मी. तः १ मीटर् पर्यन्तम् अपि भवति।

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अचिरात् - | Soon |
| अपर्याप्तम् - | Insufficient |
| अर्थगाम्भीर्यम् - | Depth of meaning |
| अवचिन्वती - | Lady gathering flowers |
| अहितुण्डिकः - | Snake-charmer |
| आधिः - | Pawn |
| आयामः - | Width |
| आवर्तः - | Whirl-pool |
| कलशः - | A container for water |
| कापालिका - | Sorceress |
| कालुष्यम् - | Dirt |
| कुरूपी - | Ugly |
| कुसीदवणिक् - | Money-lender |
| खुरः - | Hoof |
| गर्दभः - | Donkey |
| गोणी - | Sack |
| चरणम् - | Grazing |
| जीविका - | Livelihood |
| तालपत्रम् - | Palmleaf |
| दर्पणः - | Mirror |
| दास्यम् - | Slavery |
| ध्वांक्षणम् - | Braying |
| निर्बन्धः - | Compulsion |
| निर्विण्णः - | Frustrated |
| पत्रपुटः - | Vessel made of leaves |
| पीतः - | Yellow |
| पूतम् - | Sanctified |
| पृथग्भूय - | Having been separated |
| प्रसक्तिः - | Subject |
| प्रसेवः - | A square piece of cloth gathered up to the corners |
| फणा - | Hood |
| भस्म - | Sacred ash |
| माण्डलिकः - | Feudal |
| युगलम् - | Pair |
| लघुता - | Meanness |
| वक्षःस्थलम् - | Chest |
| वराहः - | Wild boar |
| वल्मीकः - | Ant-hill |
| विधूय - | Having shaken off |
| विपरिणतम् - | Changed |
| विमाता - | Stepmother |
| विरामः - | Leisure |
| वीजितवान् - | Fanned |
| व्यजनम् - | Fan |
| व्याजः - | Excuse |
| व्यापारः - | Action |
| शैवालम् - | Lichen |
| सन्त्रासयन् - | Threatening |
| सपत्नी - | Fellow-wife |
| ह्रदः - | Large, deep pool of water |

## चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

**विजितां शीर्षिकां जुलै-८८ मासे प्रकटयिष्यामः।**





* उपरितनं चित्रद्वयं पश्यन्तु। * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा मे-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। * अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। * स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। * शीर्षिकाः समपत्रे (पोस्ट-कार्ड) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। * अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावुमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

**'मार्च' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–**

प्रथमचित्रम् - **तन्त्रीवाद्याभ्यासासक्ता।**

द्वितीयचित्रम् - **भ्रमद्भ्रमरिकाग्रहणेऽशक्ता।**

प्रेषकः - सन्तोषः, २०८, ४ मुख्यमार्गः, १७ उपमार्गः, विद्यारण्यपुरम्, मैसूरु-८, कर्णाटकम्।


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३०-००

**डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६**

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**चन्दमामा पब्लिकेषन्स्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६**

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

# साहसयात्रा! अहो सौभाग्यम्!

| | |
|---|---|
| वागीशः– नमस्ते अरुण! भवतः गृहं प्रति एव प्रस्थितः आसम्। | Arun! I was just leaving for your house ! |
| अरुणः– मम गृहं प्रति? कः विशेषः? | My house ? What is the matter ? |
| वा – साहसयात्रा निश्चिता। भवान् आगमिष्यति वा इति प्रष्टुम् आगतवान्। | We have planned a travel for adventure. I wanted to ask you if you would also join ? |
| अ – साहसयात्रा? अहो सौभाग्यम्! कदा? कुत्र? किं स्वरूपम्? | Travel for adventure! what a fortune! when ? where to ? what is the plan ? |
| वा – द्विचक्रिकया जोगजलपातं प्रति गमनम्। आगामिनि भानुवासरे प्रातः ५.०० वादने प्रस्थानम्। | To Jogfalls on bicycle coming Sunday. We will Start at 5 early in the morning. |
| अ – के के आगमिष्यन्ति? कति जनाः भवेयुः? | Who are all joining ? How many in all ? |
| वा – कृष्णः, रविः, दिनेशः इत्यादयः आगमिष्यन्ति। आहत्य दश भवेयुः। | Krishna, Ravi, Dinesh etc. will be there. Altogether we may be ten. |
| अ – ममापि आगन्तुं महती इच्छा। किन्तु मम द्विचक्रिका नास्ति खलु? | I very much wish to join, but I do not have a bicycle, you see ! |
| वा – तद्विषये चिन्ता मास्तु। द्विचक्रिकाम् अहं व्यवस्थापयिष्यामि। | Do not worry. I will arrange for the bicycle. |
| अ – प्रत्यागमनं कदा? | When are we returning ? |
| वा – आहत्य दिनत्रयात्मिका यात्रा। मङ्गलवासरे रात्रौ प्रत्यागमनम्। | It is a three day journey We will be returning on Tuesday night. |
| अ – अस्तु, अहम् अपि आगमिष्यामि। प्रस्थानदिने सर्वेषां मेलनं कुत्र? | OK, I am joining. Where have we to gather ? |
| वा – मम गृहतः एव सर्वेषां प्रस्थानम्। भवान् अपि तत्रैव आगच्छतु। | We will be leaving from my house. Please be there. |

No share prices,
no political fortunes, yet...

# Over 40% of Heritage readers are professionals or executives, 61% from households with a professional / executive as the chief wage earner. Half hold a postgraduate degree or a professional diploma.

*from an IMRB survey conducted in Oct. 1986




It's an unusual magazine. It has a vision for today and tomorrow.

It features ancient cities and contemporary fiction, culture and scientific developments, instead of filmstar interviews and political gossip. And it has found a growing readership, an IMRB survey reveals. Professionals, executives and their families are reading The Heritage in depth – 40% from cover to cover, 42% more than half the magazine.

More than 80% of The Heritage readers are reading an issue more than once. And over 90% are slowly building their own Heritage collection.

Isn't it time you discovered why?

# THE HERITAGE

**So much in store, month after month.**